॥ श्रीः ॥

# काशी संस्कृत ग्रन्थमाला

१८६



धनञ्जयकृतं

# दशरूपकम्

## धनिककृतदशरूपावलोकटीकोपेतम्

सौराष्ट्र ( गुजरात ) मध्यवर्तिगोमण्डल( गोण्डाल )-स्थ
श्रीभुवनेश्वरीपीठाधीशाखण्डभूमण्डलाचार्य-

**जगद्गुरुश्रीचरणतीर्थमहाराज-**

विनिर्मिताङ्गलभाषाव्याख्याटिप्पणादिभिश्च समुल्लसितम्

**तत्रायं प्रथमः प्रकाशः**




**चौखम्भा संस्कृत संस्थान**

भारतीय संस्कृति एवं साहित्य के प्रकाशक तथा विक्रेता
पो० आ० चौखम्भा, पो० बा० नं० १३९
जड़ाव भवन के. ३७/११६, गोपाल मन्दिर लेन
वाराणसी

THE
KASHI SANSKRIT SERIES
186
****

THE

# DAŚA-RŪPAKA

OF

## DHANAÑJAYA

With

*The Daśarūpāvaloka Commentary*

BY

DHANIKA

AND

*English Translation Notes etc.*

By

*Jagad-Guru*

ACHĀRYA ŚRĪ CHARAṆATĪRTHA MAHARAJ,
*Śrī Bhuvaneśvarī-pīṭhādhīśa, Gondal, Saurashtra ( Gujarat )*

**CHAPTER I**

*SECOND EDITION THOROUGHLY REVISED*

THE
CHOWKHAMBA SANSKRIT SERIES OFFICE
VARANASI-1
1969

प्रथमसंस्करणस्य

# प्रस्तावना

श्रीधनञ्जयकृतस्य धनिककृतावलोकसहितस्य संस्कृताङ्ग्लभाषा-व्याख्यया समलंकृतस्य सोपोद्घातस्य दशरूपकस्य प्रथमः प्रकाशः विद्वद्भ्यो नाट्यशास्त्ररसिकेभ्यः समर्प्य परं मोदे। भारतीयानामार्याणां नाट्यशास्त्रं न केवलमतीव प्राचीनं किन्तु यदाऽन्येषु देशेषु मानुषता पशुतायाः स्तोकमेवा-भिद्यत तदापि भारतेऽत्रार्याः सर्वा एव नाट्यकलाः सर्वांश्च नाटकादि-(रूपक)-नियमान् अजानन् प्रादुरभावयंश्च। अस्य शास्त्रस्यास्याः कलायाश्च बीजं तथैव वेदे वर्तते यथाऽन्येषां शास्त्राणां विज्ञानानां च। अन्यानि शास्त्राण्यन्याश्च कला अधिकृत्य बहवो ग्रन्था आर्षाः पूर्वमत्रासन्सन्ति च। सम्प्रति श्रीभरतमुनिप्रणीतं नाट्यशास्त्रं विहाय सर्व एव ते प्रायो नामशेषाः सन्ति। मुनिना भरतेन नु नाट्यादीनां ये यावन्तश्च भेदा दर्शितास्ते तावन्तश्च सम्प्रति कस्मिन्नपि वाङ्मये न वर्तन्ते। नाटकप्रक-रणादिभेदोपभेदनिदर्शनं भरतमुनिकृतग्रन्थानुयायि दशरूपकं स्वगुणैर्वाऽन्य-ग्रन्थानुपस्थित्या वा प्रसिद्धिं लम्भितं जगत्यवलोक्यते। दशरूपकं साम्प्रतं प्रायः सर्वेष्वेव राजकीयनियमानुयायिविश्वविद्यालयेषु (युनीवर्सिटीषु) भारतेऽन्यत्र च पाठ्यतां भजति। किन्तु विश्वविद्यालयेषु प्रायः संस्कृत-ग्रन्थानामाङ्गलभाषाटीका अध्याप्यन्ते। तथा दशरूपकस्यापि नास्य कापि तादृशी विस्तृता टीका सम्प्रति केनाप्युपलभ्यते। एका चाङ्गलभाषाटीका केनापि Hass हासपण्डितेन पाश्चात्त्येन विहिताऽऽसीत्। सा तु नानुवाद-तामतिशेते। मूल्यं च तस्य प्रायो द्विशतपत्रप्रमितस्य ग्रन्थस्य विंशतिराज-तमुद्रामितमवर्तत। सापि सम्प्रति दुष्प्रापा। किन्तु हासमहोदयेन व्याख्याते पुस्तके (क) नास्ति पूर्णाऽवलोकटीका (ख) उदाहरणादीनां ग्रन्थप्रतीकस-ङ्ख्यैवास्ति न पाठाः (ग) अन्यमतविवेचनं न सम्यगस्ति (घ) न कापि समालोचना (ङ) अस्मत्पुस्तकतो न्यूनतरपंक्तिभृत्स्वपि–ऊनचत्वारिंश(३९) त्पृष्ठे प्रथमः प्रकाशस्तत्र समापितः। अस्मिन् पुस्तके तु—(क) अवलोकटीका पूर्णा वर्तते (ख) उदाहरणादीनां पाठाः सन्ति (ग) अन्यमतविवेचनमस्ति (घ) आवश्यकस्थानेषु समालोचनास्ति (ङ) श्रीहासपुस्तकतोऽधिकपंक्तिषु द्वादशोत्तरशतमितेषु (११२) पृष्ठेषु प्रथमः प्रकाशः समापितः। इतीयानुभयोः पुस्तकयोर्भेदः। अस्मिंश्च न किमपि तद्विषये जिज्ञासितमज्ञापितमवशिष्यते। लक्षणादीनि सर्वाण्येव भरतादीनामपि दर्शितानि एवंगुणविशिष्टस्य ग्रन्थस्य प्रथमः प्रकाशो विद्वन्मनांस्यानन्दयिष्यतीति शिवम्।

गोंडल, दिनांक ८–८–१९४२ | शुभाकांक्षी
पुनश्च दिसम्बर १९६८ | **आचार्यश्रीचरणतीर्थमहाराजः**

# PREFACE

## TO THE FIRST EDITION

दशरूपकं–Dasharupaka of धनंजय-first Prakash. Sanskrit-English with the अवलोक commentary of Dhanika. Copious English notes and translation. The नाट्यशास्त्र of the Aryans is the most ancient in the world. When other nations of the world were living a barbaric life, the Aryans in India had a good knowledge of नाट्यशास्त्र and other sciences, all of which have their origin in the Vedas. The mighty sages of old had written many books on our ancient arts and culture but most of them have perished in course of time. The same has been the fate of works on नाट्यशास्त्र. Nowadays the नाट्यशास्त्र of Bharata Muni is the only book available on the subject. No other book contains so varied and elaborate divisions of नाट्य as this. The book which ranks next to Bharat Muni's and a sort of authority on नाट्यशास्त्र is this Dasharupaka. It has been prescribed for study by almost all the universities, where its English translation is specially read by students. Detailed commentary on this book is nowhere available. There has been one English translation of this book by an English scholar Hass but it gives no more than explanatory notes on difficult words. The price of that book of 200 Pages is Rs. 20/–. Even this book is not available nowadays. In Hass' work (1) the अवलोक commentary is not complete, (2) to quote illustrations and authorities from other works, mere page numbers are given and not the actual lines, (3) corresponding authorities are not elaborately cited, (4) no personal notes are given, (5) the first prakasha is completed in only 39 pages. The salient features of our book as compared with that of Hass are : (1) The अवलोक commentary is complete, (2) illustrations are cited from other works with actual lines, indicating also their page or verse numbers, (3) comparative ideas of other authors are also given, (4) personal notes are added where necessary, (5) the first Prakasha covers 112 Pages. This shows the comparative superiority of our work to that of Hass. No description or subject is incompletely treated therein. Hence it is a book which scholars interested in नाट्यशास्त्र and university students should well study.

Gondal
8–8–1942
Again December 1968

*Acharya Sri Charantirth Maharaj*

॥ श्रीः ॥

# प्रस्तावना

अनेकदुःखपरिपूरितेऽस्मिन् खलु असारे संसारे काव्यामृतरसास्वादो नाम किमप्यपूर्वं सहृदयहृदयसंवादि वस्तु अमृतत्वेन मनीषिभिरैकमत्येन उररीकृतम्। अतः सुप्राचीनकालत एव प्रायः सर्वेष्वेव भूविषयेषु मानवसंस्कृतेरुन्मेषेण सममेव तत्तद्देशकालप्रसिद्धभारतीषु काव्यप्रादुर्भावः समजनि। अत्रापि आ हिमाचलाद् दक्षिणोदधिपर्यन्ते भारते वर्षे वेदप्रादुर्भावसमयादारभ्याद्य यावत् भूयांसि सहृदयवृन्दहृदयावर्जकाणि सुरभारतीमयानि सत्काव्यानि निर्ममिरे ऋषिभिः, ऋषिकल्पैरन्यैश्च कल्पनाकुशलैर्लोकव्यवहारतत्त्वज्ञैः कविभिः। तस्य काव्यस्य कान्तासम्मितोपदेशकतया वेदादिशास्त्रान्तरेभ्योऽपि आस्त्रीशूद्रसामान्यजनहिताय सामर्थ्यं दर्शं दर्शं तस्य बहुतायतप्रसारेऽशेषशास्त्रपरिशीलननिपुणा विपश्चितोऽपि दत्तावधाना बभूवुः। किन्तु ग्रन्थेषु पाठ्यतयोपन्यस्तानि तानि सत्काव्यानि, लिपिज्ञानविरहितानाम् अनधीतव्याकरणादिशास्त्राणां विशेषतः स्वोदरपूरणकुटुम्बभरणाद्यर्थं प्रातरारभ्य सायाह्नं यावत् ललाटोद्गतस्वेदस्रुत्या चरणावपि सिक्तीकुर्वतां तथाऽन्येषामपि युद्धप्रजापालनादिव्यग्राणां क्षत्रियादीनां च यथेप्सितहिताय न समभवन्निति नटायत्ताभिनयद्वारेण काव्यास्वादस्य उपर्युक्तसर्वविधजनानां हिताय सुखलभ्यतामापादयितुमेव दृश्यकाव्याभिधस्य काव्यभेदस्य समुत्पत्तिरभूत्। ये चेदानीं नव्यसमाजवादादिसिद्धान्तविप्रतिपन्नबुद्धयो महाशया भारतीयसंस्कृतेः प्रणेतॄन् आचार्यान् स्वकपोलकल्पितैः स्वार्थपरताब्राह्मणपक्षपातादिदोषैराक्षिपन्ति ते कृपया कर्णे कुर्वन्तु यत् सामान्यजनताया हितायैव नाट्यवेदं प्रादुर्भावयामासुरस्माकं पूर्वजा सर्वभूतेषु अभेददर्शिनो मनीषिणः, यथा च भारतीये नाट्यशास्त्रे स्मर्यते—[1]

"क्रीडनीयकमिच्छामि दृश्यं श्रव्यं च यद्भवेत्॥
न वेदव्यवहारोऽयं संश्राव्यः शूद्रजातिषु।
तस्मात् सृजापरं वेदं पञ्चमं सार्ववर्णिकम्॥"

इति।

---

१. श्रीभरतमुनिप्रणीतं नाट्यशास्त्रम्, १। ११–१२, काशीसंस्कृतग्रन्थमाला संख्या ६०, वाराणसी १९४०।

दृश्यकाव्यं तु अभिनयार्थं नटाधीनत्वात् नाट्यनाम्नाऽपि प्रसिद्धिं गच्छति[१]। नाट्याभिनयेषु नाट्यं नाम अवस्थानुकृतिः[२]। नाट्याभिनयस्तु दर्शनीयतया सामाजिकानां चाक्षुषप्रत्यक्षगोचरतां भजत इति तस्य रूपमिति नामधेयं, पुनरपि तत्राभिनयकाले नटेषु अभिनेयत्वेनोपात्तदृश्यकाव्यगतानां नायकादिपात्राणां व्यवहार-समारोपो भवतीति तत्र रूपकशब्दव्यवहारः[३]। तात्त्विकं नाट्यस्वरूपं त्वित्थं स्पष्टयन्ति भारतीयनाट्यशास्त्रटीकायामभिनवभारत्यां श्रीमदभिनवगुप्तपादाः

"नाट्यं नाम लौकिकपदार्थातिरिक्तं तदनुकारप्रतिबिम्बालेख्यसादृश्यारोपाध्यवसायोत्प्रेक्षास्वप्नेन्द्रजालादिविलक्षणं तद्ग्राहकस्य सम्यग्ज्ञानभ्रान्तिसंशयानवधारणानध्यवसाय भिन्नवृत्तान्तास्वादनरूप-संवेदनं वस्तु रसस्वभावम्··· ।"[४]

अस्तु ।

भारतवर्षे कस्मिन् समये नाट्यकलाया उत्पत्तिरभूत्, किं वा तस्या उत्पत्तौ मुख्यं निदानं, केभ्यस्तावद् भारतीयानां नाट्यविद्यायामाधमर्ण्यमित्येवंविधासु जिज्ञासासु नवीनानां प्राच्यप्रतीच्येत्युभयभूखण्डवास्तव्यानां विदुषां भूयान् मतभेदो दरीदृश्यते ।

तेषु भट्टमोक्षमूलर-श्रयूदर-हर्तेलप्रभृतीनां मतेन वैदिकसंवादसूक्तेभ्यः श्रौतयज्ञादिकर्मसु होत्रध्वर्यूद्गातृप्रभृतीनामृत्वीजामनुष्ठेयकर्मभ्यो वा नाट्योत्पत्तिः, श्रीपिशलमहोदयस्य मतेन पुत्रिकानृत्यान्नाट्योत्पत्तिः, डॉ०

---

१. नाट्यशब्दस्य व्युत्पत्तिस्तु अवस्पदनार्थनटधातोरेव ( नट अवस्पन्दने पा० धा० १५६६ )। अवस्पदनं नाट्यमिति सिद्धान्तकौमुद्यां दीक्षितपादाः ( सि० कौ० पृ० ४८३, वेङ्कटेश्वरमुद्रणालयसंस्करणम्, मुंबई० १६५६ )। भानुजीदीक्षितमहोदयेन तु अमरकोषरामाश्रमीटीकायां ( १।७।१० ) नाट्यशब्दस्य द्विविधा व्युत्पत्तिर्दर्शिता । तन्मतेन तु नटस्य कर्म इति व्यासे नटशब्दाद् 'गुणवचनब्राह्मणादिभ्यः कर्मणि ( पा० ५।१।१२४ )' इतिसूत्रविहिते ष्यञि अथवा नटधातोः 'ऋहलोर्ण्यत् ( पा० ३।१।१२४ ) इति ण्यति नाट्यमिति रूपम् । तयोः प्रथमा एवात्रास्माकम् अभिप्रेता 'नटस्य कर्म' इत्येतस्यार्थस्य प्रसङ्गेन समधिकसङ्गतत्वात् ।

२. अवस्थानुकृतिर्नाट्यम् ।

—दशरूपकम्, १।७ ।

३. तत्रैव ।

४. नाट्यशास्त्रं श्रीमदभिनवगुप्ताचार्यविरचितविवृतिसमेतम्, एम्० रामकृष्णकविना के० एस्० रामस्वामिशास्त्रिणा च सम्पादितम्, १मो भागः, पृ० ३, बडोदरा १६५६ ।

कीनोमहाशयस्याभिप्रायेण तु छायाभिनयस्यैव प्रथमनाटयत्वं, केषांचिदन्येषां मतेन यवननाटकानुकरणेनैव भारतीयनाटयनिर्माणारम्भ इत्येवमादयः सिद्धान्ता विदितवेदितव्यानां वाचकमहानुभावानां नातितिरोहिताः स्युः। वयं त्वत्र विस्तरभिया पिष्टपेषणदोषशङ्कया च तेषां सप्रपञ्चखण्डनमण्डनयोर्न प्रवर्तिष्यामहे। एतावदेव केवलमस्माकं वक्तव्यमवशिष्यते यत्, वेदादेव नाटयोत्पत्तिरितिवादिनां मतं नाटयशास्त्रकर्तुर्भरतमुनेरपि परोक्षतयाऽभिमतमिति न विस्मर्तव्यम्। यथा च नाटयशास्त्रे स्मर्यते

"एवं संकल्प्य भगवान् सर्ववेदाननुस्मरन्।
नाटयवेदं ततश्चक्रे चतुर्वेदाङ्गसम्भवम्॥
जग्राह पाठ्यमृग्वेदात् सामभ्यो गीतमेव च।
यजुर्वेदादभिनयान् रसानाथर्वणादपि॥
वेदोपवेदैः सम्बद्धो नाटयवेदो महात्मना।
एवं भगवता सृष्टो ब्रह्मणा ललितात्मकम्॥[1]

इति।

नाटयानां वेदमूलकत्वप्रतिपादकमेतत् श्रीभरतमुनिवचनजातं कथमपि नोपेक्षणीयं विद्वद्भिः परम्परासु भारतीयानां श्रद्धालुत्वमवगच्छद्भिः।

यवनिकाशब्दमात्रश्रवणाद् येषां बुद्धिषु यवन-(ग्रीक्)-प्रभावकल्पनाऽभ्युदेति[2] तान् प्रति निवेदयामो यत् यवनशब्देन यवनिकाशब्दस्य[3] लेशतोऽपि सम्बन्धो नास्ति। 'यवनिका' शब्दस्य मूलं तु 'यमनिका' इत्ययं प्राचीनतरः संस्कृतशब्दो यस्तु प्राकृतभाषायां 'जबनिका' इत्येवंरूपां परिणतिं गत्वा पुनः संस्कृते 'यमनिका' रूपेण (छद्मसंस्कृतरूपं) प्रत्या-

---

१. श्रीभरतमुनिप्रणीतं नाट्यशास्त्रम्, १।१६–१८।

२. भारतीयविद्वत्सु पण्डितराहुलसांकृत्यानमहाशया अपि स्वकृते 'वोल्गा से गङ्गा' इत्याख्ये पुस्तके मतमिदमङ्गीकुर्वन्ति। तस्य तु सोपपत्तिकं निरसनम् अस्माभिः १९५८ तमे क्रैस्ताब्दे वसुमतीपत्रे विहितम्। तत्तु तत्रैवोत्साहिभिर्वाचकमहाभागैरवलोकनीयम्।

३. यवनिका स्त्री। युनाति आवृणोति अनया। यु+ल्युट्। ङीप्। स्वार्थे कन्। टाप्। जवनिका इत्यमरटीकायाम्। तथा च भागवते (१।८।१९)
मायायवनिकाच्छन्नमज्ञाधोक्षजमव्ययम्॥
न लक्ष्यते मूढदृशा नटो नाट्यधरो यथा॥ १॥

वर्तत ।[1] एतदप्यत्रावधेयं यद् यद्यपि भारतीयरङ्गेषु नेपथ्यरङ्गपीठयोर्मध्ये यवनिका प्रलम्ब्यते किन्तु यवनदेशीयरङ्गेषु तस्या उपयोगे किमपि निश्चितं प्रमाणं नोपलभ्यते[2] । भारतीयनाट्यस्योत्पत्तिः सर्वथा भारतीयेव, न तत्र आर्याणां यवनेभ्यः किमपि आधमर्ण्यमासीदिति विद्वद्वर्याणाम् आर्थर-मैकडॉनल महोदयानां सोऽपन्निकः सिद्धान्तः[3] सुतरामभिनन्दनीय एव येन वेबेर–विण्डिश-प्रभृतीनां सर्वा वाचोयुक्तयः सुष्ठु निराक्रियन्ते ।

भाससमयात् प्रत्नतराणां दृश्यकाव्यानामिदानीमलाभाद् भारतीय-नाट्यकलायाः प्राचीनत्वे न सन्देग्धव्यम् । कथमिति चेदत्र ब्रूमः, भास-कृतिषु सर्वथा दीर्घपरिशीलनजन्या प्रौढिरवलोक्यते; वाल्मीकिरामायणे नटनाटकादिशब्दानां प्रयोगदर्शनात्तत्समयेऽपि नाट्यानां तदभिनयस्य च भूयान् प्रचार आसीदिति निश्चप्रचमेव, रामायणस्य तु भासकवेरपेक्षया सुप्राचीनत्वं न विवादास्पदं तत्कृतप्रतिमानाटकादीनां रामायणोपजीव्य-त्वात्, सारिपुत्रप्रकरणादिकर्तुरश्वघोषस्यापेक्षयाऽपि प्राचीनत्वं स्वयम-श्वघोषेण स्वकाव्ये बुद्धचरिते समादरपूर्वकं वाल्मीकेर्नामग्रहणात् । भग-वतः पाणिनेः 'पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः' 'कर्मन्दकृशाश्वादिनिः' इति सूत्रद्वयस्य सत्त्वात् तत्समयेऽपि नाट्यकलायास्तद्विषयकलक्षण-ग्रन्थानामस्तित्वमामनन्ति भारतीया अनेके विद्वद्धौरेयाः ।

शनैः शनैर्नाट्यनिर्माणस्य तदभिनयस्य च लोकेषु प्रसिद्धौ जातायां तन्नियामकलक्षणग्रन्थानां निर्माणमावश्यकमभूत् । तादृशो लक्षणग्रन्थ इदानीं नाट्यशास्त्रनाम्ना व्यपदिश्यते । प्राचीननाट्यशास्त्रीयग्रन्थेषु

---

१. सिद्धान्तोऽयं नाट्यशास्त्रसम्पादकानां सुगृहीतनामधेयानां डॉ० मनोमोहन-घोषमहाशयानामिति ते सुतरां धन्यवादार्हाः ।

२. अवलोक्यताम्—A. A. Macdonell, *A History of Sanskrit Literature*, p. 420, Second Indian Editon, Delhi 1961.

S. N. Dasgupta and S. K. De, *A History of Sanskrit Literature*, Vol. I. p. 54, 2nd. Ed. Cal. Univ. 1962

३. "The Indian drama has had a thoroughly national development, and even its origin, though obscure easily admits of an indigenous explanation.—पूर्वनिर्दिष्टे स्थले ।

इदानीं भरतमुनिविनिर्मित एक एव ग्रन्थो दृष्टिपथमायाति सर्वेऽन्ये करालेन कालेन ग्रसिताः। बहुव्यापकं, नाट्यसम्बधिनां प्रायः सर्वेषामेव विषयाणां विवरणपरमिदं भरतमुनिकृतं नाट्यशास्त्रं, शास्त्रान्तरेषु प्रावीण्यमुपगतानां विदुषामेव बुद्धिगम्यमिति अभिनेतॄणां सामान्यकाव्यरसिकानाञ्च नोपयोगि इति तद्गतविषयाणां संक्षेपकरणमप्यावश्यकं संवृत्तं येन प्रस्तुतदशरूपसदृशग्रन्थानामुत्पत्तिरभूत्। तथ्यमिदं दशरूपककर्ता स्वयं धनञ्जयः

> उद्धृत्योद्धृत्य सारं यमखिलनिगमान् नाट्यवेदं विरिञ्चि-
> श्चक्रे यस्य प्रयोगं मुनिरपि भरतस्ताण्डवं नीलकण्ठः।
> शर्वाणी लास्यमस्य प्रतिपदमपरं लक्ष्म कः कर्तुमीष्टे
> नाट्यानां किन्तु किंचित् प्रगुणरचनया लक्षणं संक्षिपामि ॥

इति पद्येन प्रकटयकरोत्। वस्तुतः प्रस्तुतेऽस्मिन् दशरूपग्रन्थे रूपकाणां नाटकप्रकरणादिदशविधं भेदं प्रदर्श्य अखिलानां नाट्याङ्गानां सलक्षणं प्रतिपादनं विहितम्।

नाट्यभेदनिरूपणे वस्तुनेतारसरूपास्त्रयो भेदका दशरूपे सुनिपुणमालोचिता दृश्यन्ते। प्रसङ्गवशान् नायकानां धीरोदात्त-धीरशान्त-धीरललित-धीरोद्धतानां लक्षणानि प्रदर्शितानि, नायिकानामपि त्रयोदशभेदा उपवर्णिताः। दशरूपग्रन्थोऽयं चतुर्भिः प्रकाशैर्विभक्तः। तेषु रसविवेचनात्मकः चतुर्थप्रकाशः किमपि वैशिष्ट्यमादधाति। तत्र प्रसङ्गप्राप्तत्वाद् विभावानुभावसात्त्विकव्यभिचारिभावस्थायिभावानां क्रमतः पर्यालोचनं विहितम्। तत्र रसविषये स्वसिद्धान्तं प्रतिष्ठापयन् ग्रन्थकृद् ध्वनिवादं निरस्यति इति विशेषेणावधानमर्हति।

नाट्यशास्त्रीयपारिभाषिकशब्दानां तात्पर्यं ग्रन्थकृता यावच्छक्यं सुबोधया शैल्या शब्दानां व्युत्पत्तिप्रदर्शनेन वाऽनेकत्र व्याकृतम्। नाट्यशास्त्रे तत्तद्विषयाणां व्याकीर्णत्वादस्य संक्षिप्तकायस्य ग्रन्थस्य झटिति नाट्यतत्त्वबुभूत्सुषु महत्तरः समादरोऽभूत्।

ग्रन्थकर्तुः स्वपरिचयविषय इदमवगम्यते यदयं धनञ्जयः विष्णुनाम्नो विदुष आत्मजः ईसवीयैकादशशताब्द्या उत्तरभागे स्वजन्मना मालवदेशमलंचकारेति। स तदानीन्तनमालवाधिपतेर्मुञ्जापराभिधस्य परमारकुलोत्पन्नस्य द्वितीयवाक्पतिराजस्य सभायामासीत्। यथा तेन स्वयमेव दशरूपान्तिमपद्येनाभ्यधायि

विष्णोः सुतेनापि धनञ्जयेन
विद्वन्मनोरागनिबन्धहेतुः ।
आविष्कृतं मुञ्जमहीशगोष्ठी—
वैदग्ध्यभाजा दशरूपमेतत् ।

दशरूपस्य काचन प्रसिद्धा वृत्तिर्वर्तते दशरूपावलोकनाम्नी धनिककृता। धनिककृतां वृत्तिमन्तरेण मूलग्रन्थस्य सर्वत्र अर्थग्रहो न सुकरो भवति। विशेषतो मूलग्रन्थे विवृतानां लक्षणानां लक्ष्यभूतानि उदाहरणान्यपि स्वयं मूलकृता नापन्यस्तानि। अतोऽस्या अपूर्णताया पूर्तिर्वृत्तिकृता विहिता।

अयं वृत्तिकृद्धनिकोऽपि विष्णोः पुत्र इति ज्ञायते वृत्तिग्रन्थस्य पुष्पिकायाम् "इति श्रीविष्णुसूतोर्धनिकस्य कृतौ दशरूपावलोके रसविचारो नाम चतुर्थः प्रकाशः समाप्तः इत्येतस्य दर्शनात्। कस्यांचित् मातृकायां स तु धनिक उत्पलराजस्य महासाध्यपालत्वेनोल्लिखितः। उत्पलराज इति तु मुञ्जस्यैव नामान्तरमिति श्रीमान् हासपण्डितोऽभिलेखादिप्रामाण्यात् प्रतिपादयति। तेन धनिकधनञ्जययोः समकालिकत्वं सिध्यति। अतः कैश्चिन्मन्यते यद् धनिक इति तु धनञ्जयस्यैव नामान्तरम्। किन्तु वृत्तिग्रन्थे क्वचित् क्वचिदुभयोर्मतभेदः प्रतीयत इति सूक्ष्मेक्षिकया विलोकयति श्रीमान् हासपण्डितः। किन्तु धनिकस्य धनञ्जयभ्रातृत्वे न क्वापि विप्रतिपत्तिरिति स एव पक्षोऽस्माभिः स्वीक्रियते।

अथेदानीं प्रस्तूयते प्रागुक्तस्य दशरूपस्य अवलोकसहितस्य प्रथमप्रकाशः प्राञ्जलाङ्ग्लव्याख्यया समुपेतः सुधियां पुरतः। वस्तुत आङ्ग्लव्याख्याग्रन्थसहितस्य ग्रन्थस्य द्वितीयं संस्करणमिदं, प्रथमसंस्करणं तु पूर्वं मुद्रापितमिदानीं समाप्तिं गतम्। किन्तु विश्वविद्यालयच्छात्रेषु अस्य महीयांसमादरमवलोक्य काशीस्थचौखम्बासंस्कृतग्रन्थमालाध्यक्षैः स पुनः प्राकाश्यं प्राप्यते। अस्मिन् संस्करणे पूर्वसंस्करणगतानामशुद्धीनां संशोधनं यथामति अस्माभिर्विहितम्। आशासेऽन्येऽपि त्रयः प्रकाशा न चिरादेव वाचकमहाभागानां पुरत आविर्भविष्यन्तीति।

अलमतिपल्लवितेनेति—

निवेदयति

स० व०

# दशरूपकप्रथमप्रकाश-गतानां

## विषयाणामनुक्रमणिका

# दशरूपकप्रथमप्रकाशावलोके

## समुल्लिखितानां ग्रन्थानां ग्रन्थकर्तॄणां च नामानि

अ

अदिव्यनायकः,

उ

उत्तर रामचरितम्,

छ

छलितरामम्,

न

नाट्यशास्त्रम्,

ब

बृहत्कथा,

भ

भरतः, ( भरतमुनिः )

म

मालतीमाधवम्,

मालविकाग्निमित्रम्,

मुद्राराक्षसम्,

मृच्छकटिकम्,

र

रत्नावली,

रामायणम्,

व

वीरचरितम्,

वेणीसंहारम्,

* श्रीरस्तु *

॥ हरिहरौ कुरुताञ्जगतां शिवम् ॥

# दशरूपकम्

प्रथमः प्रकाशः

(1) **नमस्तस्मै गणेशाय यत्कण्ठः पुष्करायते ।**
**मदाभोगघनध्वानो नीलकण्ठस्य ताण्डवे ॥१॥**

श्रव्यं काव्यं श्रुतिर्यस्य दृश्यं दृश्यमिदं जगत् ।
यः कविः सूत्रधारश्च वन्दे तं सर्वसिद्धिदम् ॥१॥
मातर्देहभृतामहो धृतिमयी नादैकरेखामयी
सा त्वं प्राणमयी हुताशनमयी बिन्दु-प्रतिष्ठामयी ।
तेन त्वां भुवनेश्वरीं विजयिनीं ध्यायामि जायां विभो-
स्त्वत्कारुण्यविकासिपुण्यमतयः खेलन्तु मे सूक्तयः ॥२॥

My obeisance to that (god) Ganesha, whose throat acts like पुष्कर ( Pushkara i. e. Mridanga–a kind of drum; a cloud ), the sonnd of which, is rumbling on account of the fulness of intoxication, when God Shiva dances.

[ In the case of the cloud, the rumbling sound of which makes the peacocks dance. ( lit : The throat acts like a cloud which enriches the dance of the peacocks. ) ]

इह सदाचारं प्रमाणयद्भिरविघ्नेन प्रकरणस्य समाप्त्यर्थमिष्टयोः प्रकृताभिमतदेवतयोर्नमस्कारः क्रियते श्लोकद्वयेन ।

In this place ( in the beginning of this work ) [ the author ] expresses his obeisance to his two

tutelary gods in the couple of verses, for he wants to regard [ as an authority ] (to follow) the customs ( conventions ) of the eminent persons (the authors), [ for they, generally express obeisance to their protector gods ] and also he wants his work to be completed free from any obstacle-( for the Gods are said to remove the obstacles that obstruct the undertaking of their worshipper-devotees ).

यत्कण्ठः पुष्करायते मृदङ्गवदाचरति—whose throat acts like पुष्कर ( the drum and the cloud ) मदाभोगेन=on account of the fulness of intoxication ( मदः intoxication and ichor ). [ The elephant is said to be like under intoxication when ichor flows from his forehead. The God Ganesha is described, in the Hindu Mythology that he has elephant's head upon his body. The nature of the elephant therefore ( to be under intoxication when ichor flows from his head ) is said to be shared by God Ganesh also. ]

घनध्वानो निविडध्वनिः [ This word is an adjective to कण्ठः )=the sound of which is rumbling नीलकण्ठस्य शिवस्य of God Shiva, ताण्डवे=उद्धते नृत्ये in the haughty dance तस्मै गणेशाय नमः=obeisance to that Ganesha.

अत्र खण्डश्लेषाश्लिष्यमाणोपमाच्छायालङ्कारः In this verse, there is the shadow of the figure of speech, simile, in the guise of श्लेष ( Pun ) which partially seems here.

नीलकण्ठस्य मयूरस्य ताण्डवे यथा मेघध्वनिः पुष्करायते इति प्रतीतेः—for it is well understood ( from the words ) that—as in the dance of a peacock, the sound of the clouds acts like a मृदङ्ग ( a kind of drum ).

Explanation :—The author meaning of the punny words which can be clearly understood, is—"The

sound of the clouds acts like मृदङ्ग when peacocks dance, and therefore the figure of speech as mentioned above is not out of place.

[ According to the meaning given by Dhanika, the figur of speach is अतिशयोक्ति ( No : 5 ) for the कविसमय convention of the poets ( See S. D. VII. 25. ) is that the sound of the cloud makes the peacocks dance and not the latter enriches the former as described here. ]

(2) दशरूपानुकारेण यस्य माद्यन्ति भावकाः ।
नमः सर्वविदे तस्मै विष्णवे भरताय च ॥२॥

My obeisance to—

*(a)* God Vishnu, whose devotees, imitating ( copying ) or seeing the imitation of his ten shapes[१] ( in the dramas and in the रासलीला etc. ) become delighted. And—

*(b)* The sage Bharata, whose lovers ( the relishers of whose dramatic science ) of [२]ten ( kinds of ) रूपानुकार ( the plays i.e. dramas ) become delighted. And who is all-knower—

*(a)* in the case of God Vishnu—He is the omniscient.

*(b)* in the case of the sage Bhrata—He is a master of all the branches of knowledge.

---

१ i. e. Ten Avataras or incarnations, Vide Apte's Sanskrit English Dictionary "मत्स्यः कूर्मो वराहश्च नरसिंहोऽथ वामनः । रामो रामश्च कृष्णश्च बुद्धः कल्की च ते दश ॥"

२ "नाटकं[१] सप्रकरणम्[२] अङ्को[३] व्यायोग[४] एव च । भाणः[५] समवकारश्च[६] वीथी[७] प्रहसनं[८] डिमः[९] । ईहामृगश्च[१०] विज्ञेयं दशकं नाट्यलक्षणम्"—Natya Shastra of Bharata. XXI. 2.

एकत्र मत्स्यकूर्मादिप्रतिमानामुद्देशेन, अन्यत्र, अनुकृतिरूपनाटकादिना यस्य भावकाः=ध्यातारो रसिकाश्च माद्यन्ति=हृष्यन्ति। तस्मै विष्णवेऽभिमताय, प्रकृताय भरताय च नमः। On one side, ( in the case of God Vishnu ) दशरूपानुकारेण=at the imitation of his ten incarnations viz. मत्स्य ( Fish ), कूर्म ( Tortoise ) etc. and on the other side, ( in the case of the sage Bharata ) seeing, reading and hearing the ten kinds of dramas. यस्य whose—भावकाः—

ध्यातारः *(a)* meditators ( of God Vishnu )

रसिकाश्च *(b)* relishers of the piquancy of ( the sage Bharata )

माद्यन्ति become delighted.

तस्मै—अभिमताय विष्णवे नमः। My obeisance to such God Vishnu who is worshipped by me.

तस्मै प्रकृताय भरताय नमः My obeisance to such a sage Bharata in whom I am interested.

श्रोतुः प्रवृत्तिनिमित्तं ज्ञापयति। Now the author shows the reason of the book he wants to write for those who want to study the Natya Shastra. Or the author now shows why his book (which he begins to write) should be studied by those who want to learn the Natya Shastra.

(3) कस्यचिदेव कदाचिद्दयया विषयं सरस्वती विदुषः।
घटयति कमपि तमन्यो व्रजति जनो येन वैदग्धीम् ॥३॥

Prose Order—सरस्वती कदाचित् दयया कस्यचित् एव विदुषः कम् अपि तम् विषयम् घटयति अन्यः येन वैदग्धीम् व्रजति।

Meanings of the words according to the prose order—सरस्वती the goddess of knowledge कदाचित् at some time ( in rare places ) दयया through her grace कस्यचिदेव विदुषः to a certain learned person ( a poet )

कम् अपि some तं विषयम् that subject घटयति bestows on अन्यः other person येन by which ( subject ) वैदग्धीम् proficiency ( perfection ) व्रजति attains.

Only a few poets can write a work, through the grace of the goddess of learning. Such a poet can deal with a subject fairly well. And other persons, who study such works can attain perfection and proficiency in that subject.

तं कञ्चिद्विषयं प्रकरणादिकं ( dramas ) कदाचिदेव कस्यचिदेव कवेः सरस्वती ( the language of the rare poet ) योजयति येन प्रकरणादिना विषयेणान्यो जनो विदग्धो भवति ।

[ According to the interpretation of Dhanika, विषय means here a drama. But the reasonable meaning of the word विषय will be the subject, which the drama treats, e.g. the sentiment of love is treated in the 'Abhijnana Shakuntla' of Kalidasa and the sentiment of valour is treated in the 'Veni Samhara' of Narayana. ]

स्वप्रवृत्तिविषयं दर्शयति । Now the author shows ( mentions ) the subject ( and its importance ) which is treated in his ( proposed ) work.

(4) उद्धृत्योद्धृत्य सारं यमखिलनिगमान्नाट्यवेदं विरिञ्चि-
श्चक्रे यस्य प्रयोगं मुनिरपि भरतस्ताण्डवं नीलकण्ठः ।
शर्वाणी लास्यमस्य प्रतिपदमपरं लक्ष्म कः कर्तुमीष्टे
नाट्यानां किन्तु किञ्चित्प्रगुणरचनया लक्षणं सङ्क्षिपामि ॥४॥

The Natya Veda—( the sacred knowledge of dancing, acting and dramas )—

*(a)* which God Brahman, having taken the essential parts of the whole Vedas, composed,

*(b)* of which the sage Bharata also performed the acting, ( the sage Bharata's work treats the method of this science )

*(c)* of which God Shiva performed the ताण्डव ( God Shiva showed to the gods and sages how to perform it practically ) and

*(d)* of which the goddess पार्वती performed the लास्य ( according to its principles ),

is really and reasonably inscrutable. And a new and original and an exhaustive book on this subject is almost impossible to an author ( of my ability ) to write

[ lit: who can be able to define every (technical) word of it. ]. I therefore abridge ( in this book ) some of the definitions of the Natyas in simple composition.

[ ताण्डव=violent dance. लास्य=a dance accompanied with singing and instrumental music. ]

यं नाट्यवेदं वेदेभ्यः सारमादाय ब्रह्मा कृतवान् । यत्सम्बन्धमभिनयं भरतश्चकार करणाङ्गहारानकरोत् । ( करण=the posture of the arms •and legs. करणs are 108 in the Natya Shastra of Bharata. अङ्गहार=the motion of the limbs. अङ्गहारs are 22 in number. ( See App. ) हरस्ताण्डवमुद्धतं, लास्यं सुकुमारं नृत्तं पार्वती कृतवती तस्य सामस्त्येन लक्षणं कर्तुं कः शक्तः । तदेकदेशस्य ( of its one part ) तु दशरूपस्य संक्षेपः क्रियत इत्यर्थः । ( translated above ).

विषयैक्यप्रसक्तं पौनरुक्त्यं परिहरति । Now the author solves ( the objections if arises about ) the repetition of (the same) subject ( which is composed, commented and practised by the authentic and superior personages to himself ).

(5) व्याकीर्णे मन्दबुद्धीनां जायते मतिविभ्रमः ।
तस्यार्थस्तत्पदैरेव सङ्क्षिप्य क्रियतेऽञ्जसा ॥५॥

When a subject is scattered in a book, the confusion of mind of the dull-witted or unintelligent

persons is possible. (The unintelligent person cannot study the science from the book in which the subjects are not in good order or are scattered). I, therefore, write this book to show the right, inteligible and abridged principles ( of the Natya Shastra ) [ lit: the meaning of the work on the subject ], in their ( of the ancient authors of this Shastra ) own words. ( The technical terms of this Shastra ) will neither be newly created nor changed ).

व्याकीर्णे विक्षिप्ते विस्तीर्णे च ( explained ) रसशास्त्रे मन्दबुद्धीनां पुंसां मतिमोहो भवति । [ Here Dhanika mentions रसशास्त्र instead of नाट्यशास्त्र. It is incorrect. Though the रसs are defined in this work, yet they are not the main subject of this Shastra ]. तेन नाट्यवेदस्यार्थस्तत्पदैरेव संक्षिप्य ऋजुवृत्त्या क्रियते ।। ( Translated above ).

इदं प्रकरणं दशरूपज्ञानफलम् ।। दशरूपं किंफलमित्याह

The aim of this book is the knowledge of ten kinds of dramas ( i. e. those who study this book, will be acquainted with the art of ten kinds of Dramas ). Now the author shows ( tells ) the aim of ten kinds of Dramas.

(6) आनन्दनिस्यन्दिषु रूपकेषु व्युत्पत्तिमात्रं फलमल्पबुद्धिः ।
योऽपीतिहासादिवदाह साधुस्तस्मै नमः स्वादुपराङ्मुखाय ।।६।।

My obeisance to that weak-witted good man who says that the effect of ( reading and seeing the Dramas ), that ooz the bliss (or happiness of mind) is, only the perfect proficiency and scholarship like ( the result of reading ) histories and other books, for he ( though an honest man ) is averse from relishing ( the real effect of the Dramas ).

[ Here the words नमः=obeisance and साधुः=good

and honest man, are used ironically. Their senses, meant by the author, are नमः=curse on him or I pity him, and साधुः=an ignorant or simpleton. ]

अत्र केचित्–'धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च । करोति कीर्तिं प्रीतिं च साधु-काव्यनिषेवणम् ॥' इत्यादिना त्रिवर्गादिव्युत्पत्तिं काव्यफलत्वेनेच्छन्ति । तन्निरासेन स्वसंवेद्यः परमानन्दरूपो रसास्वादो दशरूपाणां फलम् । न पुनरितिहासादिवत् त्रिवर्गादिव्युत्पत्तिमात्रमिति दर्शितम् । नम इति सोल्लुण्ठम् ॥

Here ( in this subject ) some want ( to say ) and quote–"The reading and studying of the good काव्यs ( काव्यs include Dramas also ) gives proficiency, regard an love for धर्म (religion), अर्थ ( wealth and the principles of economy ), काम (the worldly enjoyments that do not affect the Dharma and Artha ) and मोक्ष ( absolution of the soul from metempsychosis, and fame and love for the practical arts. )" And they also want to say that the result of the good Kavya is त्रिवर्ग-व्ययुत्पत्ति त्रिवर्ग = धर्म, अर्थ, काम, व्युत्पत्ति= scholarship and मोक्ष. But the author has shown ( in the above verse ) that their principle is refuted and the object of the ten kinds of Dramas is the relishing of the रस which is ( self experience ) स्वसंवेद्य. And also, the author has shown that Dramas are not only the means of त्रिवर्ग and मोक्ष like histories etc. Here the word नमः is used ironically.

'नाट्यानां लक्षणं संक्षिपामि' इत्युक्तम् । किं पुनस्तन्नाट्यमित्याह—

The author has promised to abridge the definitions of the नाट्यs ( See No. 4 ) and now he defines the नाट्य.

(7) अवस्थानुकृतिर्नाट्यम्

The imitation of the circumstances ( shown in the dramas etc. ) is ( called ) Natya.

"देवतानामृषीणां च राज्ञामथ कुटुम्बिनाम् ।
कृतानुकरणं लोके नाट्यमित्यभिधीयते ॥
लोकस्य चरितं यत्तु नानावस्थान्तरात्मकम् ।
तदङ्गाभिनयोपेतं नाट्यमित्यभिसंज्ञितम् ॥
यानि शास्त्राणि ये धर्मा यानि शिल्पानि याः क्रियाः ।
लोकधर्मप्रवृत्तानि तानि नाट्यं प्रकीर्त्तितम् ॥"

Bharata. XXVI. 114, 115, 117.

काव्योपनिबद्धधीरोदात्ताद्यवस्थानुकारश्चतुर्विधाभिनयेन तादात्म्यापत्तिर्नाट्यम् ।

The imitation of the states of heroes viz. धीरोदात्त and others, who are connected with the context of the Kavyas ( Dramas ), with four kinds of actings, getting erectness (of the state it imitates) is (called) Natya.

To copy one's natural state in a state is नाट्य. [ The heroes धीरोदात्त and others and the four kinds of acting will be defined and shown later on. ]

(8) **रूपं दृश्यतयोच्यते**

तदेव नाट्यं दृश्यमानतया रूपमित्युच्यते । नीलरक्तादिरूपवत् ।

The Natya is called रूप becauss it can be seen ( in the stage ).

Like the colours blue, red etc.

(9) **रूपकं तत्समारोपात्**

नटे रामाद्यारोपेण वर्तमानत्वाद्रूपकं मुखचन्द्रादिवत् ।

Because, the acting of the actors is attributed to the states of the heroes etc. the Natya is called रूपक, as in the sense of the word मुखचन्द्र, the brightness of the moon is attributed to the face. This becomes a figure of speech.

एकस्मिन्नर्थे प्रवर्तमानस्य शब्दत्रयस्य 'इन्द्रः पुरन्दरः शक्रः' इतिवत् प्रवृत्तिनिमित्तभेदो दर्शितः । The sense conveyed by the

words नाट्य, रूप and रूपक is one and the same just like three words इन्द्र, पुरन्दर and शक्र. [ But there is some difference amongst these words according to the acceptation of the words ( applicability of the words ) ].

(10) दशधैव रसाश्रयम् ॥७॥

The रूपक is of ten kinds only, on account of its being a receptacle of the रसs or sentiments.

रसानाश्रित्य वर्तमानं दशप्रकारकम् । ( Translated above ). एवेत्यवधारणं शुद्धाभिप्रायेण । नाटिकायाः सङ्कीर्णत्वेन वक्ष्यमाणत्वात् ।

The word एव in the text, which means the limitation, is to show the pure dramas ( i. e. नाटक, प्रकरण etc. ), for the other varieties of रूपक namely नाटिका etc. are to be classed as miscellaneous ones.

तानेव दश भेदानुद्दिशति । Now the author names the ten varieties ( of the रूपक ).

(11) नाटकमथ प्रकरणं भाणः प्रहसनं डिमः ।
व्यायोगसमवकारौ वीथ्यङ्केहामृगा इति ॥८॥

They are:—Nataka, Prakarana, Bhana, Prahasana, Dima, Vyayoga, Samavakara, Vithi, Anka and Ihamriga.

ननु—"डोम्बी श्रीगदितं भाणो भाणीप्रस्थानरासकाः ।
काव्यं च सप्त नृत्यस्य भेदाः स्युस्तेऽपि भाणवत् ॥" इति रूपकान्तराणामपि भावादवधारणानुपपत्तिरित्याशङ्क्याह—। Some authors say that—"Dombi, Shrigadita, Bhana, Bhani, Prahasana, Rasaka and Kavya, these seven varieties of नृत्य also should be counted ( included ) as Bhana."

*Question*—When these varieties exist, why the limitation of the varieties of रूपक ?

*Answer*—The author clears this objection in the following—

(12) अन्यद्भावाश्रयं नृत्यम् ।

The Nritya is another thing ( than Natya ). It ( the Nritya ) is the receptacle of भाव ( disposition and emotion ).

रसाश्रयान्नाट्याद्भावाश्रयं नृत्यमन्यदेव । तत्र भावाश्रयमिति विषयभेदात् । नृतेर्गात्रविक्षेपार्थत्वेनाङ्गिकबाहुल्यात् । लोकेऽपि च 'अत्र प्रेक्षणीयकम्' इति व्यवहारान्नाटकादेरन्यन्नृत्यम् । Natya, which is the receptacle of भाव is another thing than (different thing from) Nritya because the former is the receptacle of रस while the latter is, भावाश्रय, the receptacle of भाव [ These three definitions make them different things from each other. ]

The Nritya is quite a different thing from the Nataka etc. because—

*(a)* It is the receptacle of Bhava and the subject matter of both is quite different from that of each other,

*(b)* The meaning of the root नृत्, from which the word नृत्य is derived, is 'to dance' meaning the moving about of the limbs,

*(c)* The sense of the word नृत्य is mostly the gestural actions,

*(d)* The performer of this ( नृत्य ) is called नट ( an actor not a hero ) and

*(e)* This word is generally used for a show ( not for a dramatic action ).

तद्भेदत्वाच्छ्रीगदितादेरवधारणोपपत्तिः । Thus the श्रीगदित etc. are quite different things : as they are the varieties of the नाटक. Thus the limitation is reasonable.

नाटकादि च रसविषयम् । The subject matter of the dramas is रस.

रसस्य च पदार्थीभूतविभावादिकसंसर्गात्मकवाक्यार्थहेतुकत्वाद्वाक्यार्थाभिनयात्मकत्वम् । रसाश्रयमित्यनेन दर्शितम् ।

Moreover, the Nataka is naturally the acting according to the sense of the speech ( sentences ) therein. The source of the रस is the language ( of the Nataka ) and its sense, the अनुभाव etc. and their associates ( सात्त्विक भाव. etc. ). The नाटक, therefore, is but the language ( with gestures ) and its meaning is therefore reasonably termed as the रसाश्रय.

नाट्यमिति च 'नट अवस्पन्दने' इति नटेः किञ्चिच्चलनार्थत्वात्सात्त्विकबाहुल्यम् । The word नाट्य is derived from the root नट्, the meaning of which is to move gently. This word therefore conveys the sense mostly of gentleness.

अत एव तत्कारिषु च नटव्यपदेशः । Under these circumstances, the performer of the Natya is classed as नट ( while the performer of the नृत्य is classed as नर्तक ).

यथा च गात्रविक्षेपार्थत्वे समानेऽप्यनुकारात्मकत्वेन नृत्तादन्यन्नृत्यम् । The Nritya is a different thing from the Nritta though the motion of the limbs is common in both ( नृत्य and नृत्त ), but the नृत्य is the imitation of actions and the नृत्त is only the moving about of the limbs.

तथा वाक्यार्थाभिनयात्मकान्नाट्यात्पदार्थाभिनयात्मकमन्यदेव नृत्यम् । So the नृत्य which is the imitating action of the words and their meaning is a differeut thing from the नाट्य which is the acting of the meaning of the episode ( the sentences ).

प्रसङ्गान्नृत्तं व्युत्पादयति । Now the author defines the नृत्त which is occasional in this place.

(13) **नृत्तंताललयाश्रयम् ।**

The Nritta is the receptacle of ताल and लय. ( ताल means striking the drum in a particular length of

time. It enriches the music. The लय means the time in music. )

तालश्चञ्चुपुटादिः। लयो द्रुतादिः। तन्मात्रापेक्षोऽङ्गविक्षेपोऽभिनय-शून्यो नृत्तमिति। The ताल sare चञ्चुपुट and others and the लयs are द्रुत etc. (See App.) The mere dancing, which does not require the acting after any particular state ( of hero ) and which is according to these मात्राs ( measures ) of music, is नृत्त.

अनन्तरोक्तं द्वितयं व्याचष्टे। Now the author explains both ( the नृत्य and the नृत्त ).

(14) आद्यं पदार्थाभिनयो मार्गो देशी तथा परम् ॥६॥

The first of the above ( नृत्य ) is acting according to the words and their meaning. It is also known ( designated ) as मार्ग while the other ( नृत्त ) is called देशी.

नृत्यं पदार्थाभिनयात्मकं मार्ग इति प्रसिद्धम्। नृत्तं च देशीति। ( Translated above )

[ According to the Sangita Ratnakara of Sharngadeva, नृत्य ( the dance ) means which accompanies or follows वाद्य ( the sound of musical instruments ). He ( Sharngadeva ) is also of the opinion that the नृत्य is of two kinds (1) मार्ग and (2) देशी. The नृत्य of धनञ्जय is a variety of नृत्य of Sharngadeva.

"गीतं वाद्यं तथा नृत्यं त्रयं सङ्गीतमुच्यते ॥२१॥
मार्गो देशीति तद्द्वेधा तत्र मार्गः स उच्यते।
यो मार्गितो विरिञ्च्याद्यैः प्रयुक्तो भरतादिभिः ॥२२॥
देवस्य पुरतः शम्भोर्नियताभ्युदयप्रदः।
देशे देशे जनानां यद्रुच्या हृदयरञ्जकम्।

गानं च वादनं नृत्यं तद्देशीत्यभिधीयते ॥२३॥
नृत्यं वाद्यानुगं प्रोक्तम्—॥" Sangita Ratnakara I. I.

But the नृत्त of भरत is the same as that of धनञ्जय ।
"अत्रोच्यते न खल्वर्थं नृत्तं किञ्चिदपेक्षते । किन्तु शोभां जनयतीत्यतो नृत्तमिदं स्मृतम् ॥२६०॥ प्रायेण सर्वलोकस्य नृत्तमिष्टं स्वभावतः । माङ्गल्यमिति कृत्वा तु नृत्तमेतत्प्रकीर्त्तितम् ॥२६१॥ विवाहप्रसवावाहप्रमोदाभ्युदयादिषु । विनोदकरणं चैव नृत्तमेतत् प्रकीर्त्तितम् ॥२६२॥" Natya Shastra of Bharata IV. ]

द्विविधस्यापि द्वैविध्यं दर्शयति । Now the author shows two kinds of each of the ( above mentioned ) varieties ( of acting and dancing ).

(15) मधुरोद्धतभेदेन तद्द्वयं द्विविधं पुनः ।
लास्यताण्डवरूपेण नाटकाद्युपकारकम् ॥१०॥

Again, there are two varieties of the above two ( नृत्य and नृत्त ). (1) मधुर which is also called लास्य and (2) उद्धत which is also called ताण्डव. [ मधुर=tender, उद्धत=haughty ] Both these refine the acting in the dramas. The drrmas are enriched with them.

सुकुमारं द्वयमपि लास्यम् । उद्धतं द्वितयमपि ताण्डवम् । Each of the above ( नृत्य and नृत्त ) is of two kinds according to their tenderness and haughtiness. When tenderly performed, they are called लास्य and when haughtily performed, they are called ताण्डव.

प्रसङ्गोक्तस्योपयोगं दर्शयति । तच्च नाटकाद्युपकारकमिति । नृत्यस्य क्वचिदवान्तरपदार्थाभिनयेन नृत्तस्य च शोभाहेतुत्वेन नाटकादावुपयोग इति । Now the author shows the usefulness of both that are mentioned topically. These ( नृत्य and नृत्त ) enrich the acting in the dramas. The former refines the subordinate acting and the latter adds grace to the acting.

अनुकारात्मकत्वेन रूपकाणामभेदात् किंकृतो भेद इत्याशङ्क्याह । All the रूपकs ( See in No. 11 ) are the imitation of states. What then makes their ( ten ) varieties ? Why should they not be termed as नाटक only ? Now the author answers this objection.

(16) वस्तु नेता रसस्तेषां भेदकः ।

What differentiate them are वस्तु ( story and the plot ), नायक ( the hero ) and रस ( the sentiment ).

वस्तुभेदान्नायकभेदात्, रसभेदाद्रूपकाणामन्योन्यं भेद इति । They differ from one another, for they have their own kind of plot, hero and sentiment.

वस्तुभेदमाह । Now the author shows the varieties of Plot.

(17) वस्तु च द्विधा ।

कथमित्याह ।

The plot is of two kinds.

(18) तत्राधिकारिकं मुख्यमङ्गं प्रासङ्गिकं विदुः ॥११॥

They are (1) the chief plot which is called topic or theme and (2) the subordinate plot which is called an episodical plot and which becomes the part of the chief plot,

प्रधानभूतमाधिकारिकम् । यथा रामायणे रामसीतावृत्तान्तः । e. g. the story of Rama and Sita in the (drama of) Ramayana. तदङ्गभूतं प्रासङ्गिकम् । यथा तत्रैव विभीषणसुग्रीवादिवृत्तान्त इति । e. g. in the same drama ( the Ramayana ) the stories of Sugriva and Vibhishana and others.

निरुक्त्याधिकारिकं लक्षयति । Now the author interprets and defines the Topic.

(19) [1]अधिकारः फलस्वाम्यमधिकारी च तत्प्रभुः ।
तन्निर्वृत्तमभिव्यापि वृत्तं स्यादाधिकारिकम् ॥१२॥

The Adhikara means meed and he who is its master ( entitled to it ) is called अधिकारिन् । The story of a plot ( the acting of state ), which is to be performed by the अधिकारिन् ( hero ) and which pervades the whole plot is called आधिकारिक or Topic.

फलेन स्वस्वामिसम्बन्धोऽधिकारः । फलस्वामी चाधिकारी । तेनाधिकारेणाधिकारिणा वा निर्वृत्तं, फलपर्यन्ततां नीतम् । ( led or continued to the last result ) इतिवृत्तम् ( history or the story of the plot ) आधिकारिकम् ।

प्रासङ्गिकं व्याचष्टे । Now the author explains the episodical plot.

(20) प्रासङ्गिकं परार्थस्य स्वार्थो यस्य प्रसङ्गतः ।

The episodical means, where the state is acted to enrich the story of others and to adorn itself occasionally. ( Bharata names it as आनुषङ्गिक also ).

यस्येतिवृत्तस्य परप्रयोजनस्य सतस्तत्प्रसङ्गात्स्वप्रयोजनसिद्धिस्तत्प्रासङ्गिकमितिवृत्तं प्रसङ्गनिर्वृत्तेः । The story which is acted in support of other's ( i. e the main ) story and its own purpose is answered with that of other's ( of hero ) is called Episodical, because it is acted occasionally.

---

१ "इतिवृत्तं द्विधा चैव बुधस्तु परिवर्तयेत् । आधिकारिकमेकं स्यात्प्रासङ्गिकमथापरम् ॥३॥ कवेः प्रयत्नान्नेतॄणां युक्तानां विध्यपाश्रयात् । कल्प्यते यत्फलप्राप्तिः समुत्कर्षात्फलस्य तु ॥४॥ कारणात्फलयोगस्य वृत्तं स्यादाधिकारिकम् । परोपकरणार्थं तु कीर्त्यते ह्यानुषङ्गिकम् ॥५॥" Bh. XXI.

"इदं पुनर्वस्तु बुधैर्द्विविधं परिकल्प्यते । आधिकारिकमेकं स्यात्प्रासङ्गिकमथापरम् ॥४२॥ अधिकारः फले स्वाम्यमधिकारी च तत्प्रभुः । तस्येतिवृत्तं कविभिराधिकारिकमुच्यते ॥४३॥ अस्योपकरणार्थं तु प्रासङ्गिकमितीष्यते ॥" Sahitya Darpana. VI.

प्रासङ्गिकमपि पताकाप्रकरीभेदाद् द्विविधमित्याह । Now the author shows that the Episodical plot is of two kinds: (1) पताका and (2) प्रकरी.

[1](21) **सानुबन्धं पताकाख्यं प्रकरी च प्रदेशभाक् ॥१३॥**

( The Episodical plot is of two kinds: ) (1) पताका which is connected continuously with the Topic ( आधिकारिक ) and (2) प्रकरी which occupies only some part ( or parts ) of the theme.

दूरं यदनुवर्तते प्रासङ्गिकं सा पताका । सुग्रीवादिवृत्तान्तवत् । The Episodical which accompanies the Topic to a great extent is called पताका. e. g. the story of Sugreeva and others ( in the drama of Ramayana ). पताकेवासाधारणनायकचिह्नवत्तदुपकारित्वात् । Because it supports the theme like the banner which is one of the chief badges of the hero. यदल्पं सा प्रकरी । श्रवणादिवृत्तान्तवत् । The प्रकरी is the Episodical which is connected with the Topic to a small extent. ( It is a momentary part of the story ), e. g. the story of Shravana ( in the drama of Ramayana ).

पताकाप्रसङ्गेन पताकास्थानकं व्युत्पादयति । Now the author defines the पताकास्थानक for the order of the context demands its definition.

(22) **प्रस्तुतागन्तुभावस्य वस्तुनोऽन्योक्तिसूचकम् ।**
**पताकास्थानकं तुल्यसंविधानविशेषणम् ॥१४॥**

The पताकास्थानक ( the representative or the substitute of a banner ) which suggests either the part of

---

१ "यद्वृत्तं हि परार्थं स्यात्प्रधानस्योपकारकम् । प्रधानवच्च कल्प्येत सा पताकेति कीर्तिता ॥ २५ ॥ फलं सङ्कल्प्यते सद्भिः परार्थं यस्य केवलम् । अनुबन्धेन हीनस्य प्रकरीं तां विनिर्दिशेत् ॥ २६ ॥" ( Bharata. XXI )

"व्यापि प्रासङ्गिकं वृत्तं पताकेत्यभिधीयते ॥ ६७ ॥" "प्रासङ्गिकं प्रदेशस्थं चरितं प्रकरी भवेत् ॥ ६८ ॥" Sahitya Darpana. VI.

the plot in hand or the following part of the plot, is of two kinds according to its nature: (1) तुल्यसंविधान ( in which, the story coincides with the subject matter of the context ) and (2) तुल्यविशेषण (in which, the modifying words are equally used for the subject-matter and itself.) It ( पताकास्थानक ) indicates the theme suggestively and in itself it is an incidental one. ( See the diagram. )

प्राकरणिकस्य भाविनोऽर्थस्य सूचकं रूपं पताकावद्भवतीति पताकास्थानकम्। It is called पताकास्थानक because it indicates ( suggestively ) the acting of a story just to be performed as the banner indicates the approach ( of king and army etc.) and it serves the plot like पताका। तच्च तुल्येतिवृत्ततया तुल्यविशेषणतया च द्विप्रकारकम्। अन्योक्तिसमासोक्तिभेदात्। And it is of two kinds: (1) firstly, one in which, the arrangement of the story is uniform and the figure of speech is अन्योक्ति ( See. App. ) and (2) secondly, that in which, the punny adjectives equalise the main story and the incidental one, and the figure of speech is समासोक्ति (See. App.). यथा रत्नावल्याम्।
"यातोऽस्मि पद्मनयने समयो ममैष सुप्ता मयैव भवती प्रतिबोधनीया।
प्रत्यायनामयमितीव सरोरुहिण्याः सूर्योऽस्तमस्तकनिविष्टकरः करोति॥"
यथा च तुल्यविशेषणतया।

"उद्दामोत्कलिकां विपाण्डुररुचं प्रारब्धजृम्भां क्षणाद्
आयासं श्वसनोद्गमैरविरलैरातन्वतीमात्मनः।
अद्योद्यानलतामिमां समदनां नारीमिवान्यां ध्रुवं
पश्यन् कोपविपाटलद्युति मुखं देव्याः करिष्याम्यहम्॥"

As for example, in the Ratnavali—

"The sun whose rays ( like his hand ) set upon the peak of the setting mountain, consoles the lotus plant, just as a loving husband, at the time of taking leave of his beloved wife, consoles her. He seems to say—

| (In the case of the plant) | (In the case of the loving wife) |
|---|---|
| (1) पद्मनयने O Love, whose eyes are the lotus flowers. | (1) Love, whose eyes are as beautiful as the lotus flower. |
| (2) अहं यातोऽस्मि I am going. | (2) I am leaving you ( I am going ). |
| (3) ममैष समयः This is my time to go. | (3) I have to go, for it is the call of my duty. |
| (4) सुप्ता भवती You will sleep (will be closed) when I am gone. | (4) You will sleep ( will be sad ) when I am gone. |
| (5) मयैव प्रतिबोधनीया When I rise again, you will be flowered (or blown) by me alone. | (5) When I come back, you will be aroused by me alone. |

( According to Dhanika, the figure of speech in this verse, is अन्योक्ति. But समासोक्ति would be mentioned more reasonably. Moreover the figure अन्योक्ति is not found in many well-known books on Rhetoric ; for its purpose is answered by the अप्रस्तुतप्रशंसा ( See App. ). This verse is the example of the तुल्यसंविधान-पताकास्थानक "I look at this creeper in the garden, as one looks at a beautiful woman other than his own wife and

| (In the case of the creeper) | (In the case of the woman) |
|---|---|
| (*a*) उद्दामोत्कलिका which is budding excessively. | (*a*) whose uneasiness is too much. |
| (*b*) विपाण्डुररुचम् the colour of which is pale. | (*b*) whose complexion is pale. |
| (*c*) क्षणात् just now. | (*c*) just now. |

(*d*) प्रारब्धजृम्भाम् which begins to open itself. | (*d*) who begins to yawn.

(*e*) समदनाम् which is around the mango tree. | (*e*) who is loving her lover. ( i. e. me )

(*f*) अविरलैः continuous. | (*f*) continuous.

(*g*) श्वसनोद्गमैः by bloomings. | (*g*) by breathing hard.

(*h*) आत्मनः of itself. | (*h*) of herself.

(*i*) आयासं effort. | (*i*) difficulty.

(*j*) आतन्वतीम् indicating. | (*j*) expressing.

I surely make the ( my ) queen so angry that the colour of her face will be red.

( Here these two verses indicate the plot which is to be acted just now ).

( The पताकास्थानक is of four kinds according to the नाट्यशास्त्र of भरतमुनि. The author of the Sahitya Darpana also follows Bharata. The passage of the Sahitya Darpana runs as follows ):—

"यत्रार्थे चिन्तितेऽन्यस्मिँस्तल्लिङ्गोऽन्यः प्रयुज्यते । (···चिन्त्यमानेऽपि तल्लिङ्गार्थः Bhar: ) आगन्तुकेन भावेन पताकास्थानकं तु तत् ॥ ४५ ॥

तद्भेदानाह—

सहसैवार्थसम्पत्तिर्गुणवत्युपचारतः ॥
पताकास्थानकमिदं प्रथमं परिकीर्त्तितम् ॥ ४६ ॥ (···परिकीर्त्यते Bharata. )

यथा रत्नावल्यां "वासवदत्तेयं" इति राजा यदा तत्कण्ठपाशं मोचयति तदा तदुक्त्या "सागरिकेयम्" इति प्रत्यभिज्ञाय "कथं प्रिया मे सागरिका—

1 The yawning is one of the natural signs of love of a woman. Vide S. D. III. 120.

अलमलमतिमात्रं साहसेनाधुना ते
त्वरितमयि विमुञ्च त्वं लतापाशमेतम् ।
चलितमपि निरोद्धुं जीवितं जीवितेशे
क्षणमिह मम कण्ठे बाहुपाशं निधेहि ॥"

इति फलरूपार्थसम्पत्तिः पूर्वापेक्षयोपचारातिशयाद्गुणवत्युत्कृष्टा ।

वचः सातिशयं श्लिष्टं नानाबन्धसमाश्रयम् ।
( वचसातिशयश्लिष्टं काव्यबन्धसमाश्रयम् Bharata, )
पताकास्थानकमिदं द्वितीयं परिकीर्त्तितम् ॥ ४७ ॥

यथा वेण्याम्—"रक्तप्रसाधितभुवः क्षतविग्रहाश्च । स्वस्थीभवन्तु कुरुराजसुताः सभृत्याः ॥" अत्र रक्तादीनां रुधिरशरीरार्थहेतुकश्लेषवशेन बीजार्थप्रतिपादनात् नेतृमङ्गलप्रतिपत्तौ सत्यां द्वितीयं पताकास्थानकम् ।

अर्थोपक्षेपकं यत्तु लीनं सविनयं भवेत् । (···पक्षेपणं Bharata.)
श्लिष्टप्रत्युत्तरोपेतं तृतीयमिदमुच्यते ॥ ४८ ॥ ( ···मिदमिष्यते ॥ Bharata. )

लीनमव्यक्तार्थम्, श्लिष्टेन सम्बन्धयोग्ये नाभिप्रायान्तरप्रयुक्तेन प्रत्युत्तरेणोपेतम् ॥ सविनयं विशेषनिश्चयप्राप्त्या सहितं, संपाद्यते यत्तत्तृतीयं पताकास्थानकम् ।

यथा वेण्यां द्वितीयेऽङ्के—"कञ्चुकी—देव भग्नम् । राजा—केन । कञ्चुकी—भीमेन । राजा—कस्य । कञ्चुकी—भवतः । राजा—आः किं प्रलपसि । कञ्चुकी—( सभयम् ) देव ननु ब्रवीमि–भग्नं भीमेन भवतः । राजा—धिक्, वृद्धापसद कोऽयमद्य ते व्यामोहः । कञ्चुकी—देव न व्यामोहः सत्यमेव ।

भग्नं भीमेन भवतो मरुता रथकेतनम् । पतितं किङ्किणीकाणबद्धाक्रन्दमिव क्षितौ ॥"

अत्र दुर्योधनोरुभङ्गरूपप्रस्तुतसङ्क्रान्तमर्थोपक्षेपणम् ॥

द्व्यर्थो वचनविन्यासः सुश्लिष्टः काव्ययोजितः ।
प्रधानार्थान्तराक्षेपी पताकास्थानकं परम् ॥ ४९ ॥
( उपन्यासः संयुतश्च तच्चतुर्थमुदाहृतम् Bharata. )

यथा रत्नावल्याम्—

"उद्दामोत्कलिकां विपाण्डुररुचं प्रारब्धजृम्भां क्षणाद्
आयासं श्वसनोद्गमैरविरलैरातन्वतीमात्मनः ।

अद्योद्यानलतामिमां समदनां नारीमिवान्यां ध्रुवम्
पश्यन्कोपविपाटलद्युतिमुखं देव्याः करिष्याम्यहम् ॥"

अत्र भाव्यर्थः सूचितः । एतानि चत्वारि पताकास्थानानि कचिन्मङ्गलार्थं सर्वसन्धिषु भवन्ति । काव्यकर्तुरिच्छावशाद् भूयोऽपि भवन्ति । यत्पुनः केनचिदुक्तम् 'मुखसन्धिमारभ्य सन्धिचतुष्टये क्रमेण भवन्ति' तदन्ये न मन्यन्ते । एषामत्यन्तमुपादेयानामनियमेन सर्वत्रापि सर्वेषामपि भवितुं युक्तत्वात् ॥"

एवमाधिकारिकद्विविधप्रासङ्गिकभेदात् त्रिविधस्यापि त्रैविध्यमाह ।

The above varieties ( one Adhikarika and two kinds of Prasangika ) make three kinds of the plot. Each of these varieties again is of three kinds. Now the author shows this—

(23) **प्रख्यातोत्पाद्यमिश्रत्वभेदात्त्रेधापि तत्त्रिधा ।**
**प्रख्यातमितिहासादेरुत्पाद्यं कविकल्पितम् ॥१५॥**
**मिश्रं तु सङ्करात्ताभ्यां दिव्यमर्त्यादिभेदतः ॥**

इति निगदव्याख्यातम् ।

Each of the above-defined three varieties of the plot, again are of three kinds ; (1) **प्रख्यात** ( the story of which is well known in the history and literature), (2) **उत्पाद्य** ( imaginary plot ) and (3) **मिश्र** ( the plot which is partly historical and partly imaginary ). There are three other kinds of each of these (3 × 3) varieties of the plot and they are according to the story of the heroes who are represented as (1) **दिव्यनायक** ( the heroes etc. who are divine or mythical ) e. g. God Shiva in the Parvati Parinaya (2) **दिव्यादिव्य—०** ( who are partly divine and partly mortal e. g. **श्रीकृष्ण** in the **रुक्मिणीपरिणय** ) and (3) **मर्त्य** or **अदिव्य** ( mortals, e. g.; **भीमसेन** in the Venisamhara ).

The plots contain the story of these three varieties that depend upon the varieties of the heroes

whose story is related therein. No accurate definitions of these ( दिव्य etc. ) heroes is found in the works on the subject. I will show it, with arguments, in the App. The word आदि ( and others ) in the text includes दिव्यादिव्य or दिव्यमर्त्य.

## DIAGRAMS

No. (1)

नाट्य or रूप and रूपक । ( See text Nos: 7, 8 and 9. )

No. (2)

नृत्य or मार्ग ( 12, 14 ) — नृत्त or देशी ( 13, 14 )

मधुर or लास्य ( 15 ) — उद्धत or ताण्डव ( 15 )

These make—

( 1 ) मधुरनृत्य or लास्यनृत्य
( 2 ) उद्धतनृत्य or ताण्डवनृत्य
( 3 ) मधुरनृत्त or लास्यनृत्त
( 4 ) उद्धतनृत्त or ताण्डवनृत्त

No. ( 3 )

वस्तु (Plot)

आधिकारिक ( 18, 19 ) — प्रासङ्गिक ( 18, 20 )

पताका (21) — प्रकरी ( 21 )

प्रख्यात ( २३ ) — उत्पाद्य ( २३ ) — मिश्र ( २३ )

These make

| | |
|---|---|
| आधिकारिक-वस्तु | (1) प्रख्यात–आधिकारिक–वस्तु । |
| | (2) उत्पाद्य–आधिकारिक–वस्तु । |
| | (3) मिश्र–आधिकारिक–वस्तु । |
| प्रासङ्गिक-वस्तु | (4) प्रख्यात–पताका–प्रासङ्गिक–वस्तु । |
| | (5) उत्पाद्य–पताका–प्रासङ्गिक–वस्तु । |
| | (6) मिश्र–पताका–प्रासङ्गिक–वस्तु । |
| | (7) प्रख्यात–प्रकरी–प्रासङ्गिक–वस्तु । |
| | (8) उत्पाद्य–प्रकरी–प्रासङ्गिक–वस्तु । |
| | (9) मिश्र–प्रकरी–प्रासङ्गिक–वस्तु । |

No. (4)

पताकास्थानक । No. 21.




These are

( 1 ) तुल्यसंविधानप्रस्तुतभाववस्त्वन्योक्तिसूचक ।
( 2 ) तुल्यसंविधानागन्तुभाववस्त्वन्योक्तिसूचक ।
( 3 ) तुल्यविशेषणप्रस्तुतभाववस्त्वन्योक्तिसूचक ।
( 4 ) तुल्यविशेषणागन्तुभाववस्त्वन्योक्तिसूचक ।

Again they are multiplied by दिव्यादि । Then—

**( आधिकारिकवस्तूनि )**

(1) दिव्यप्रख्यातआधिकारिकवस्तु ।

(2) दिव्यादिव्यप्रख्यातआधिकारिक वस्तु ।

(3) मर्त्यप्रख्यातआधिकारिकवस्तु ।

(4) दिव्य, उत्पाद्य, आधिकारिक वस्तु ।

(5) दिव्यादिव्य, उत्पाद्य, आधिकारिक वस्तु ।

(6) मर्त्य, उत्पाद्य, आधिकारिक वस्तु ।
(7) दिव्य, मिश्र, आधिकारिक वस्तु ।
(8) दिव्यादिव्य, मिश्र, आधिकारिक वस्तु ।
(9) मर्त्य, मिश्र, आधिकारिक वस्तु ।

( प्रासङ्गिक वस्तूनि )

(10) दिव्य, प्रख्यात, पताका, प्रासङ्गिक वस्तु ।
(11) दिव्यादिव्य, प्रख्यात, पताका, प्रासङ्गिक वस्तु ।
(12) मर्त्य, प्रख्यात, पताका, प्रासङ्गिक वस्तु ।
(13) दिव्य, उत्पाद्य, पताका, प्रासङ्गिक वस्तु ।
(14) दिव्यादिव्य, उत्पाद्य, पताका, प्रासङ्गिक वस्तु ।
(15) मर्त्य, उत्पाद्य, पताका, प्रासङ्गिक वस्तु ।
(16) दिव्य, मिश्र, पताका, प्रासङ्गिक वस्तु ।
(17) दिव्यादिव्य, मिश्र, पताका, प्रासङ्गिक वस्तु ।
(18) मर्त्य, मिश्र, पताका, प्रासङ्गिक वस्तु ।
(19) दिव्य, प्रख्यात, प्रकरी, प्रासङ्गिक वस्तु ।
(20) दिव्यादिव्य, प्रख्यात, प्रकरी, प्रासङ्गिक वस्तु ।
(21) मर्त्य, प्रख्यात, प्रकरी, प्रासङ्गिक वस्तु ।
(22) दिव्य, उत्पाद्य, प्रकरी, प्रासङ्गिक वस्तु ।
(23) दिव्यादिव्य, उत्पाद्य, प्रकरी, प्रासङ्गिक वस्तु ।
(24) मर्त्य, उत्पाद्य, प्रकरी, प्रासङ्गिक वस्तु ।
(25) दिव्य, मिश्र, प्रकरी, प्रासङ्गिक वस्तु ।
(26) दिव्यादिव्य, मिश्र, प्रकरी, प्रासङ्गिक वस्तु ।
(27) मर्त्य, मिश्र, प्रकरी, प्रासङ्गिक वस्तु ।

( The examples of all these 27 varieties of plot ( or the parts of the plot ) are given in the Appendix.)

( As for example, the प्रख्यात plot is in the first half of the Veni-samhara, उत्पाद्य plot is in the Malati-madhava and the मिश्र Plot is in the Shakuntala. )

तस्येतिवृत्तस्य किं फलमित्याह । Now the author shows the object of the plot ( classified above ).

(24) **कार्यं त्रिवर्गस्तच्छुद्धमेकानेकानुबन्धि च ॥ १६ ॥**

The effect ( of the acting of such plots ) is त्रिवर्ग

or the triad ( See under No. 6 ) Their secondary effect also is not to be disregarded. The author says that the effect of seeing or reading some dramas, is the introduction of the religious principles ; of some dramas, earning money and of some dramas is pure worldly enjoyments ( i. e. how to enjoy the worldly things ). The effect of a drama must be only one ( as shown above ), two or all.

धर्मार्थकामाः फलम् । तच्च शुद्धमनेकानुबन्धं द्वित्र्यनुबन्धं वा । ( explained above ).

तत्साधनं व्युत्पादयति now the author describes its ( of effect of the plot ) means.

(25) स्वल्पोद्दिष्टस्तु तद्धेतुर्बीजं विस्तार्यनेकधा ।

The बीज or the seed of the plot, is the source of the effect ( mentioned above.) and it should be shown in a few words and expanded in various ways.

स्तोकोद्दिष्टः कार्यसाधकः । पुरस्तादनेकप्रकारं विस्तारी हेतुविशेषो बीजवद्बीजम् । स्तोकोद्दिष्टः mentioned in a few words, कार्यसाधकः completing the effect, पुरस्तादनेकप्रकारं विस्तारी । further on, expanding in many ways हेतुविशेषो बीजवत्, बीजम् । the particular source of the plot like a seed ( of a tree etc. ) is called बीज. [ बीज=seed. Here, this word is used in its figurative sense. ][१]

यथा रत्नावल्याम्—As for example (the बीज is shown) in the Ratnavali—वत्सराजस्य रत्नावलीप्राप्तिहेतुरनुकूलदैवो यौगन्धरायणव्यापारो विष्कम्भके न्यस्तः । The effort of Yogandharayana, which was the root cause of obtaining

---

१ "अल्पमात्रं समुत्सृष्टं बहुधा यत्प्रसर्पति । फलावसानं यच्चैव बीजं तदभिधीयते" Bh: 21. 22.

"स्वल्पमात्रं समुद्दिष्टं बहुधा यत्प्रसर्पति । फलस्य प्रथमो हेतुर्बीजं तदभिधीयते" S. D. VI. 64-65.

Ratnavali, by Vatsaraja and in which the luck was friendly to the hero, is shown in the Vishkambhaka.

"यौगन्धरायणः—कः सन्देहः (द्वीपादन्यस्मात्०—इति पठति)" इत्यादिना "प्रारम्भेऽस्मिन्स्वामिनो वृद्धिहेतौ–०" इत्यन्तेन ।

"Yougandharayana—What doubt ? ( There is no doubt about it )–( he recites the verse द्वीपादन्यस्मात् ). The बीज begins in the above and ends in—"प्रारम्भे etc."

यथा वा वेणीसंहारे—द्रौपदीकेशसंयमनहेतुर्भीमक्रोधोपचितयुधिष्ठिरोत्साहो बीजमिति । Or in the Venisamhara, the बीज is the firmness of Yudhisthira accumulated by the irritation of Bhima–the cause of braiding Draupadi's hair.

तच्च महाकार्यावान्तरकार्यहेतुभेदादनेकविधम् । This बीज is of many ( two ) kinds–(1) महाकार्यहेतु the source of the great effect and (2) अवान्तरकार्यहेतु the source of the subordinate effect. अवान्तरवीजस्य संज्ञान्तरमाह Now the author mentions technical term for the अवान्तरबीज ।

(26) अवान्तरार्थविच्छेदे बिन्दुरच्छेदकारणम् ।

When the main story is separated by any subordinate story ( or–when the context is intervened by any subordinate story ), the part of the plot which conjoins the context ( or reminds the main plot ) is called बिन्दु । ( which is the cause of disintervening. )

यथा रत्नावल्यामवान्तरप्रयोजनानङ्गपूजापरिसमाप्तौ कथार्थविच्छेदे सति अनन्तरकार्यहेतुः "उदयनस्येन्दोरिवोद्वीक्षते–॥ सागरिका ( श्रुत्वा ) कहं एसोसो उदयणनरिन्दो जस्स अहं तादेण दिण्णा ( कथमेष स उदयननरेन्द्रो यस्याहं तातेन दत्ता )" इत्यादि । बिन्दुः जले तैलबिन्दुवत् प्रसारित्वात् । As for example, in the Ratnavali–"They are looking at your ( of the King Udayana ) feet as though they are looking at the rays of the moon.

**Sagarika**—( hearing ) Why ! this is the king Udayana, to whom I have been given ( in betrothment ) by my father". This passage was spoken when the chain of the main story was broken at the end of the worship of Cupid ( in the festival ) which was for a subordinate purpose ( not a part of main story ). The above passage reminds of the main story and therefore it is a **बिन्दु**. Though the **बिन्दु** is a technical term here, yet it is termed according to its literal sense also, for it spreads itself like a **बिन्दु** ( drop ) of oil upon the surface of water.

**इदानीं पताकाद्यं प्रसङ्गाद् व्युत्क्रमोक्तं क्रमार्थमुपसंहरन्नाह ।**

Now the author concludes the **पताका** etc., to continue the order, which was occasionally left up.

(27) **बीजबिन्दुपताकाख्यप्रकरीकार्यलक्षणाः ।**
**अर्थप्रकृतयः पञ्च ता एताः परिकीर्त्तिताः ॥१८॥**

There are five **अर्थप्रकृति**s of drama. They are **बीज**, **बिन्दु**, **पताका**, **प्रकरी** and **कार्य**. They are called **अर्थप्रकृति**s because they are the leading source or occasion of the grand object of a drama.[1]

**अर्थप्रकृतयः प्रयोजनसिद्धिहेतवः**. They are the cause of the fulfilment of the object of a drama.

**अन्यदवस्थापञ्चकमाह**—The author shows the five other stages of drama.

(28) **अवस्थाः पञ्च कार्यस्य प्रारब्धस्य फलार्थिभिः ॥**
**आरम्भयत्नप्राप्त्याशा नियताप्तिफलागमाः ॥१९॥**[2]

---

१ "बीजबीन्दुपताकाश्च प्रकरीकार्यमेव च । अर्थप्रकृतयः पञ्च, ज्ञात्वा योज्या यथाविधि ॥" Bharata XXI 22. S. D. VI. 64-65.

२ "प्रारम्भश्च प्रयत्नश्च तथा प्राप्तेश्च सम्भवः । नियता च फलप्राप्तिः फलयोगश्च पञ्चमः ॥" 9. "इतिवृत्ते यदावस्थाः पञ्चारम्भादिकाः स्मृताः ॥" 21. Bharata XXI.

There are five stages of the कार्य ( denouement ) which is begun by those who are desirous of its fruit. Their names are (1) आरम्भ, (2) यत्न, (3) प्राप्त्याशा, (4) नियताप्ति and (5) फलागम.

यथोद्देशं लक्षणमाह। Now the author defines ( the above mentioned five stages ) according to their order.

(29) औत्सुक्यमात्रमारम्भः फललाभाय भूयसे।

The effect is called आरम्भ ( commencement ). It is an ardent desire of a hero and others for obtaining rich fruition.

इदमहं सम्पादयामीत्यध्यवसायमात्रमारम्भ इत्युच्यते। यथा रत्नावल्यां–"प्रारम्भेऽस्मिन्स्वामिनो वृद्धिहेतौ दैवे चेत्थं दत्तहस्तावलम्बे।" इत्यादिना सचिवायत्तसिद्धेर्वत्सराजस्य कार्यारम्भो यौगन्धरायणमुखेन दर्शितः। ( when a dramatical person says or shows in his acting that ) 'I will accomplish this', such his effort is called आरम्भ or the effort e. g. in the Ratnavali, when Yougandharayana says. "In this effort which is the source ( or the cause ) of (my) master's success ( or prosperity ) and which is thus supported by ( in which the luck has thus given the support of its hand ) his ( my master's ) luck." Here the effort or the कार्य is shown ( or expressed ) through Yougandharayana.[1]

अथ प्रयत्नः Now the author defines the प्रयत्न।

(30) प्रयत्नस्तु तदप्राप्तौ व्यापारोऽतित्वरान्वितः ॥२०॥

---

In the Sahitya Darpana, the reading is the same as in the text of this book.

१—"औत्सुक्यमात्रबन्धुस्तु यद्बीजस्य निबध्यते। महतः फलयोगस्य स खल्वारम्भ इष्यते।" Bha. XX. 10. "भवेदारम्भ औत्सुक्यं यन्मुख्यफलसिद्धये" S. D. VI. 61.

When the fruition of the कार्य is not obtained ( or is delayed ) the exertion accompanied a hurry is called प्रयत्न ।[1]

तस्य फलस्याप्राप्तावुपाययोजनादिरूपश्चेष्टाविशेषः प्रयत्नः । यथा रत्नावल्यामालेख्याभिलेखनादिर्वत्सराजसमागमोपायः—"तहावि यथा-णत्थि अण्णो दंसणुबाओ त्ति जहातहा आलिहिअ जधासमीहिअं करिस्सं" इत्यादिना दर्शितः । When the object of the effort is not obtained, to use ( some ) remedy ( of failure or disappointment etc. ) is called **प्रयत्न.** As for example the प्रयत्न is shown in the Ratnavali when Sagarika portrays वत्सराज, because she could not see him. It begins from her portraying as "**Sagarika**–Nevertheless, as there is no other way to see him, I will portray him anyhow and I will do what I desire.

प्राप्त्याशामाह । Now the author defines प्राप्त्याशा ।

(31) **उपायापायशङ्काभ्यां प्राप्त्याशा प्राप्तिसम्भवः ॥**

When the possibility of obtaining the desired object is doubtful on account of the presence of some obstacles and the hope is not given up, the acting or the speech is called प्राप्त्याशा ।

उपायस्यापायशङ्कायाश्च भावादनिर्धारितैकान्ता फलप्राप्तिः प्राप्त्याशा । When the success is not quite sure ( though its hope is not given up ) on account of the presence of both, the favourable means and the possibility of some obstacles, it is called the प्राप्त्याशा ॥ यथा रत्नावल्याम् तृतीयेऽङ्के । वेषपरिवर्ताभिसरणादौ समागमोपाये सति वासवदत्तालक्षणापायशङ्कायाः । An example of the प्राप्त्याशा is seen in the Ratnavali–when the changing of dress etc. is the

---

१ "अपश्यतः फलप्राप्तिं व्यापारो यः फलं प्रति । परश्चौत्सुक्यगमनं स प्रयत्नः प्रकीर्त्तितः ।" Bha: XXI. 11.

The same reading in the Sahitya Darpana.

sure means of the union ( of the hero and heroine ) and the fear of the coming of Vasavadatta ( as an obstacle ) also is shown. The passage runs thus—"एवं जदि अकालवादाली विइ आअच्छिअ अण्णदो ण णइस्सदि वासवदत्ता । ( एवं यदि अकालवातालीवागत्यान्यतो न नेष्यति वासवदत्ता )" If Vasavadatta, like a whirlwind does not come and take away ( the hero ) to one side. इत्यादिना दर्शिताऽनिर्धारितैकान्ता समागमप्राप्तिः । The uncertainty of the union is shown and therefore it is a प्राप्त्याशा ।[1]

नियताप्तिमाह । Now the author defines नियताप्ति.

(32) **अपायाभावतः प्राप्तिर्नियताप्तिः सुनिश्चिता ॥२१॥**

The certainty of getting the success on account of the absence of obstacle is called नियताप्ति ॥[2]

अपायाभावादवधारितैकान्ता फलप्राप्तिर्नियताप्तिरिति । ( Explained. ) यथा रत्नावल्याम् "विदूषकः—सागरिका दुक्करं जीविस्सदि ( सागरिका दुष्करं जीविष्यति ) ।" इत्यनन्तरम्—"राजा—वयस्य देवीप्रसादनं मुक्त्वा नान्यमत्रोपायं पश्यामि ।" इत्यनन्तराङ्कार्थबिन्दुनाऽनेन देवीलक्षणापायस्य प्रसादनेन निवारणान्नियता फलप्राप्तिः सूचिता । As for example in the Ratnavali–"Clown–It is now very difficult for Sagarika to live." Having commenced this and concluding in, "King–My friend, I do not see any other remedy in this matter than to conciliate the queen."; here नियताप्ति is shown by the removal of the obstacle in the form of (anger of the) queen and by conciliating her. And this नियताप्ति

---

१ "उपायापायशङ्काभ्यां प्राप्त्याशा प्राप्तिसम्भवः" S. D. VI. 72. Bharata names it as प्राप्तिसम्भव and defines it thus—"ईषत्प्राप्तिश्च या काचिदर्थस्य परिकल्प्यते । भावमात्रेण संज्ञेयो विधिज्ञैः प्राप्तिसम्भवः ॥" XXI. 12.

२ Bharata names it नियता फलप्राप्तिः । "नियता च फलप्राप्तिर्यत्र भावेन पश्यति । नियतां तां फलप्राप्तिं सगुणास्तु विनिर्दिशेत् ।" XXI. 13. "अपायाभावतः प्राप्तिर्नियताप्तिस्तु निश्चिता" S. D. VI. 72.

indicates the subject of the next act in a बिन्दु. [ In the Sahitya Darpana also, the example of नियताप्ति is the same as given above. But this example is quite out of place here. The queen Vasavadatta, according to her description in the Ratnavali is अधीरा प्रौढा and मानिनी and is very difficult to be reconciled. When we see the context of the Ratnavali, we find in the passage, quoted above, that the king is nearly despaired of the life of Sagarika. If he proposes to reconcile the queen, he does so because there is no other means to remove the catastrophe of his loving Sagarika and in reconciling the queen there is a dim shadow of hope. Under these circumstances, Vishwanath and Dhanika examplify the नियताप्ति inappropriately. The better example of the नियताप्ति may be the following passage of the 'Shakuntala'.

"शकुन्तला—हला चिन्तेमि अहं अवहीरणभीरु पुणो वेवइ मे हिअअं ( हला चिन्त्यामहं ( पद्यम् ) अवधीरणाभीरु पुनर्वेपते मे हृदयम् )······सख्यौ—अत्तगुणावमाणिणि को दाणिं शरीरणिव्वावत्तिअं' सारदिअं जोसिणिं पडंतेण वारेदि ( आत्मगुणावमानिनि क इदानीं शरीरनिर्वापयित्रीं शारदीं ज्योत्स्नां पटान्तेन वारयति ). Shakuntala—"O friends, I think about the versification ( of love ) but my heart is trembling from the fear of being rejected by him ( the King )"······Friends—"O friend, you are slighting your own good qualities. Who, in this world would prevent ( from coming to himself ) the autumnal moonlight, which delights ( tranquilises ) his own body, with the end of the cloth ( with a cloth ) ?" Here the obstacle ( अपाय ) was the fear of rejection, in the mind of Shakuntala. This obstacle is removed by her friends and there is sure suceess in her love affair. This is therefore a नियताप्ति । ]

फलयोगमाह. Now the author defines फलयोग.

(33) **समग्रफलसम्पत्तिः फलयोगो यथोदितः ॥**

The success in the fulfilment of the result is called फलयोग ।

यथा रत्नावल्यां रत्नावलीलाभचक्रवर्त्तित्वावाप्तिरिति । As for example,—the obtaining of ( winning ) Ratnavali and the emperorship ( by the hero ) is the फलयोग in the Ratnavali.[1]

सन्धिलक्षणमाह–Now the author shows the definition of the सन्धिs. [ Here again Dhanika's standpoint is wrong. The author is not defining the सन्धिs here, but he shows why the सन्धिs are five. The सन्धिs are defined later on. Under these circumstances, Dhanika should have written सन्ध्युत्पत्तिमाह or सन्धिसङ्ख्यामाह ]

(34) **अर्थप्रकृतयः पञ्च पञ्चावस्थासमन्विताः ॥ २२ ॥**
**यथासङ्ख्येन जायन्ते मुखाद्याः पञ्च सन्धयः ॥**

Because the अर्थप्रकृतिs are five ; for, they accompany the five stages ( according to the different circumstances ), the सन्धिs also are ( become ) of five kinds–viz. मुख, प्रतिमुख etc. according to the order of the अर्थप्रकृतिs.

अर्थप्रकृतीनां पञ्चानां यथासङ्ख्येनावस्थाभिः पञ्चभिर्योगाद्यथासङ्ख्येनैव वक्ष्यमाणा मुखाद्याः पञ्च सन्धयो जायन्ते । (explained above),

सन्धि–सामान्यलक्षणमाह. Now the author shows the general definition of the सन्धि.

---

१ "अभिप्रेतं समग्रं च प्रतिरूपं क्रियाफलम् । यद्दृश्यते निवृत्ते तु फलयोगः स उच्यते" Bha. XXI. 14. ॥ "सावस्था फलयोगः स्याद्यः समग्रफलोदयः" S. D. VI. 73.

(35) अन्तरैकार्थसम्बन्धः सन्धिरेकान्वये सति ॥२३॥

The unification of the state of the objects of the parts of the story is called सन्धि ।

एकेन प्रयोजनेनान्वितानां कथांशानामवान्तरार्थप्रयोजनसम्बन्धः सन्धिः । ( Explained above ).

के पुनस्ते सन्धयः Now the author shows the varieties of the सन्धिs.

(36) मुखप्रतिमुखे गर्भः सावमर्शोपसंहृतिः ॥

They are मुख, प्रतिमुख, गर्भ, अवमर्श and उपसंहार ।

यथोद्देशं लक्षणमाह । Now the author defines all the varieties of the सन्धि according to the order mentioned above.

(37) मुखं बीजसमुत्पत्तिर्नानार्थरससम्भवा ॥ २४ ॥
अङ्गानि द्वादशैतस्य बीजारम्भसमन्वयात् ॥

The arising of the source of the drama ( the beginning of the plot ) is called मुख. And the मुख is the source of diverse ( subordinate ) stories, diverse objects and diverse sentiments. There are twelve divisions of this ( मुखसन्धि ) and they are used for the commencement of the बीज[1].

बीजानामुत्पत्तिरनेकप्रकारप्रयोजनस्य रसस्य हेतुर्मुखसन्धिरिति व्याख्येयम् , तेनात्रिवर्गफले प्रहसनादौ रसोत्पत्तिहेतोरेव बीजत्वमिति । The above text should be explained thus—the मुख-सन्धि is of many kinds. The प्रहसन etc. therefore have the बीज which is the source of the sentiments only and not the source of the त्रिवर्ग [ त्रिवर्ग See in the No. 6 ]. अस्य बीजारम्भार्थयुक्तानि द्वादशाङ्गानि भवन्ति

---

१ "यत्र बीजसमुत्पत्तिर्नानार्थरससम्भवा । काव्ये शरीरानुगतं तन्मुखं परिकीर्त्तितम्" Bha: XXI. 39.

"यत्र बीजसमुत्पत्तिर्नानार्थरससम्भवा । प्रारम्भेण समायुक्ता तन्मुखं परिकीर्त्तितम्" S. D. VI. 76–77.

तान्याह । Now the author mentions the twelve divisions of the मुख ।

(38) **उपक्षेपः परिकरः परिन्यासो विलोभनम् ॥ २५ ॥**
**उक्तिः प्राप्तिः समाधानं विधानं परिभावना ।**
**उद्भेदभेदकरणान्यन्वर्थान्यथ लक्षणम् ॥ २६ ॥**

They are (1) उपक्षेप (2) परिकर (3) परिन्यास (4) विलोभन (5) उक्ति (6) प्राप्ति (7) समाधान (8) विधान (9) परिभावना (10) उद्भेद (11) भेद and (12) करण. Their names are after their meanings.

[ अथ लक्षणम् should be connected with the next passage. But the Nirnaya Sagar Press and the Gujrati Press Editions that are before me now, join this passage with the above text. If these editions are followed, the prose-order must be अथ लक्षणम् ( लक्षणम्—नाम जातावेकवचनम् ) उपक्षेपः परिकरः etc. ] :[१]

एतेषां स्वसंज्ञाव्याख्यातानामपि सुखार्थं लक्षणं क्रियते । Though they are explained in their names ( their names are according to their meanings ), the author defines them to make the terms easy to be understood.

(39) **बीजन्यास उपक्षेपः ।**

To mention the बीज ( either directly or indirectly ) is called उपक्षेप.

यथा रत्नावल्यां ( नेपथ्ये )—

"द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात् ।

आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः ॥" इत्यादिना यौगन्धरायणो वत्सराजस्य रत्नावलीप्राप्तिहेतुभूतमनुकूलदैवं स्वव्यापारं बीजत्वेनोपक्षिप्तवानित्युपक्षेपः । As for example, in the Ratnavali—

---

१ "उपक्षेपः परिकरः परिन्यासो विलोभनम् । युक्तिः प्राप्तिः समाधानं विधानं परिभावना ॥ उद्भेदः करणं भेद एतान्यङ्गानि वै मुखे" Bha. XXI. 59-60. S. D. VI. 81-82.

"( Behind he scene[1] ) The favourable fate brings immediately the desired object even from the other continent, from the middle of the ocean and from the end of the quarter ; and makes one its possessor." By this ( the stage manager ) alludes to the effect (or the success of hero) of Yogandhrayana's being the cause of the favourable fate in the form of obtaining Ratnavali.[2]

परिकरमाह Now the author defines परिकर.

(40) **तद्बाहुल्यं परिक्रिया ।**

The multiplicity of that ( उपक्षेप ) is called the परिकर.[3]

यथा तत्रैव "अन्यथा क सिद्धादेशप्रत्ययप्रार्थितायाः सिंहलेश्वर-दुहितुः समुद्रे प्रवहणभङ्गभग्नोत्थितायाः फलकासादनम् ।" इत्यादिना "सर्वथा स्पृशन्ति स्वामिनमभ्युदयाः" इत्यन्तेन बीजोत्पत्तेरेव बहूकरणात्परिकरः । As for example, in the same book (Ratnavali)–"Otherwise how (could it be possible) the finding a plank by the daughter of the king of Ceylon, who was begged ( by me to make my master's queen ) through the belief in the prediction of the sage ; and who on her way to our country, sunk in the sea on account of the shipwreck ; and rose up ( on the surface of the sea )"–beginning here and ending with–"Prosperity attends our master in

१ This passage was not uttered in the नेपथ्य ( behind the scene ). It was recited by the stage-manager in the open stage.

२ "काव्यार्थस्य समुत्पत्तिरुपक्षेप इति स्मृतः" ॥ Bha. XXI. 71. S. D. VI. 83.

३ "समुत्पन्नार्थबाहुल्यं ज्ञेयः परिकरस्तु सः ।" Bha. XXI. 72.
"समुत्पन्नार्थबाहुल्यं ज्ञेयः परिकरः पुनः" S. D. VI. 83.

every way" is the परिकर; for it shows only the बीजोत्पत्ति.

परिन्यासमाह। Now the author defines the परिन्यास.

(41) तन्निष्पत्तिः परिन्यासः।

Its ( of the बीज ) completion is called परिन्यास।[1]

यथा तत्रैव "प्रारम्भेऽस्मिन्स्वामिनो वृद्धिहेतौ दैवे चेत्थं दत्तहस्तावलम्बे॥
सिद्धेर्भ्रान्तिर्नास्ति सत्यं तथापि स्वेच्छाचारी भीत एवास्मि भर्तुः॥"
इत्यनेन यौगन्धरायणः स्वव्यापारदैवयोर्निष्पत्तिमुक्तवानिति परिन्यासः॥

As for example in the same book—"There is no doubt about the success in this my undertaking, which is the source of our master's prosperity, and which his goodluck supports ( gives support of its hand ). Nevertheless I am afraid ( of my master ) on account of my being acting of my own accord." By this, Yougandharayana expresses the (would be) success in his effort and agreeability of his master's luck, It is therefore a परिन्यास.

विलोभनमाह। Now the author defines the विलोभन.

(42) गुणाख्यानं विलोभनम्।

The laudation of one's ( hero's etc. ) good qualities is called विलोभन.[2]

यथा रत्नावल्याम्—

"अस्तापास्तसमस्तभासिनभसः पारं प्रयाते रवौ
आस्थानीं समये समं नृपजनः सायन्तने सम्पतन्।
सम्प्रत्येष सरोरुहद्युतिमुषः पादांस्तवासेवितुं
प्रीत्युत्कर्षकृतो दृशामुदयनस्येन्दोरिवोद्वीक्षते॥

---

१ "तन्निष्पत्त्या तु कथनं परिन्यासः प्रकीर्त्तितः।" Bha. XXI. 72.
"तन्निष्पत्तिः परिन्यासः" S. D. VI. 84.

२ "गुणनिर्वर्णनं यत्तु विलोभनमिति स्मृतम्" Bha. XXI. 73.
"गुणाख्यानं विलोभनम्" S. D. VI. 84.

इति वैतालिकमुखेन चन्द्रतुल्यवत्सराजगुणवर्णनया सागरिकायाः समागम-हेत्वनुरागबीजानुगुण्येनैव विलोभनाद्विलोभनमिति ।

As for example, in the Ratnavali—

"At this evening time, when the sun, whose rays are dispersed and set, has gone to the further end of the sky, the group of the tributary kings is going together towards the assembly-hall to attend to your ( the king's ) feet that resemble the lotus flower ( that steal the beauty of the lotus flower ) , and that produces the excess of joy to the eyes like the पादाः ( rays ) of the moon. ( Here the word ) पादान् has double meaning. पाद=the foot and the rays of the sun or the moon. ) ( In the case of rays of the moon— सरोरुहद्युतिमुषः=those that steal the beauty of the lotus flowers ( the rays of the moon make the lotus flowers faded ). दृशाम् प्रीत्युत्कर्षकृतः those that produce the excess of joy to the eyes. ) This group of the subordinate kings looks as if they are looking at the rising moon." Here the विलोभन is shown in the attraction described by the bards with the similarity of the moon and the king Vatsaraja, which multiplies the cause of the बीज in the form of the love in the mind of सागरिका which can be fulfilled by the unity with the King ( i. e. marriage ). [ This description shows that the King is handsome and powerful and consequently he is the object of the successful love of the most beautiful lady in the world. ]

यथा च वेणीसंहारे । As in the Venisamhara also—

"मन्थायस्तार्णवाम्भः प्लुतकुहरवलन्मन्दरध्वानधीरः
कोणाघातेषु गर्जत्प्रलयघनघटाऽन्योन्यसंघट्टचण्डः ।
कृष्णाक्रोधाग्रदूतः कुरुकुलनिधनोत्पातनिर्घातवातः
केनास्मत्सिंहनादप्रतिरसितसखो दुन्दुभिस्ताडितोऽयम् ॥

इत्यादिना "यशोदुन्दुभिः" इत्यन्तेन द्रौपद्या विलोभनाद्विलोभनमिति ॥

By whom this drum—the rumbling sound of which is resembling that of the mountain Mandara, which was shaken, when the ocean was being churned and water ( of the ocean ) went to the cavities and fell back, and being violent is like that of the collision of the roaring clouds of the universal destruction, which is confusing ears, and which is the harbinger of the wrath of Draupadi ; and which is like thundering whirlwind in the form of the portent of destruction of the dynasty of Kuru ; and which is like ( lit. a friend of ) the echo of our lionlike roaring—is beaten." With this which ends at "the drum of fame". Here Draupadi is enticed and the passage is called विलोभन or enticing.

अथ युक्तिः । Now the author defines the **युक्ति.**

(43) **सम्प्रधारणमर्थानां युक्तिः ।**

The deliberation of the subject matter is called युक्तिः [1] ( युक्ति=Reason ).

यथा रत्नावल्याम्—"मयाऽपि चैनां देवीहस्ते सबहुमानं निक्षिपता युक्तमेवानुष्ठितम् । कथितं च मया यथा बाभ्रव्यः कञ्चुकी सिंहलेश्वरामात्येन वसुभूतिना सह कथं कथमपि समुद्रादुत्तीर्य कोशलोच्छित्तये गतेन रुमण्वता घटितः" । As in the Ratnavali–"I also have acted reasonably when I handed her ( Ratnavali ) to the queen with much respect (to Ratnavali). And I have told her also that Babhravya, the chamberlain and Vasubhuti, the Prime minister of the King of Ceylon, on any account, have come out of the ocean and they met with Rumanwan, who has gone to destroy the Kingdom of the Koshalas.—इत्यनेन सागरिकाया अन्तःपुरस्थाया वत्सराजस्य सुखेन दर्शनादिप्रयोजनावधारणा-

१ "सम्प्रधारणमर्थानां युक्तिरित्यभिधीयते" Bha. XXI. 73.

"सम्प्रधारणमर्थानां युक्तिः" S. D. VI. 84.

द्वाभ्रव्यसिंहलेश्वरामात्ययोः स्वनायकसमागमहेतुप्रयोजनत्वेनावधारणा-द्युक्तिरिति । The above passage is a युक्ति for the cause of Vatsaraja's seeing Sagarika happily, who is in his own harem, is ascertained with foresaying the result of meeting Babhravya and the Prime minister of the King of Ceylon, and the meeting which is mentioned here, is the cause of their lord's unity with Ratnavali.

अथ प्राप्तिः Now the प्राप्ति is defined.

(44) **प्राप्तिः सुखागमः ।**

The obtaining of happiness is called प्राप्तिः[१] । यथा वेणीसंहारे—"चेटी—भट्टिणि परिकुविदो विअ कुमारो लक्खीअदि ।" ( भर्त्रि परिकुपित इव कुमारो लक्ष्यते ) इत्युपक्रमे—"भीमः —

मथ्नामि कौरवशतं समरे न कोपाद्दुःशासनस्य रुधिरं न पिवाम्युरस्तः ।
सञ्चूर्णयामि गदया न सुयोधनोरू सन्धिं करोतु भवतां नृपतिः पणेन ॥

द्रौपदी ( श्रुत्वा सहर्षम् )—णाध अस्सुदपुव्वं खु एदं वअणं ता पुणो पुणो भण ( नाथ, अश्रुतपूर्वं खलु-एतद्वचनं तत्पुनः पुनर्भण)" इत्यनेन भीमक्रोधबीजान्वयेनैव सुखप्राप्त्या द्रौपद्याः प्राप्तिरिति । As for example in the Venisamhara:—"Maid servant—The Prince ( Bhima ) seems to be very indignant." Beginnig here and ending in "Bhima—Will I not crush down the hundred Kauravas, in battle, with anger ? Will I not drink the blood from the bosom of Dusshasana ? Will I not break ( lit: pulverise ) the thighs of Suyodhana with my club ? Why then your king is making peace ( with our enemies ) with a compact ? Draupadi ( hearing with delight)—my Lord, These words were not heard before. I therefore request you to speak so again and again." In this passage, the obtaining of happiness by Draupadi,

---

१ "सुखार्थस्योपगमनं प्राप्तिरित्यभिसंज्ञितम् ।" Bha. XXI. 74.
"प्राप्तिः सुखागमः ।" S. D. VI. 84.

throuh the बीज in the form of Bhima's wrath, is expressed and consequently it is a प्राप्ति.

यथा च रत्नावल्याम्—"सागरिका– ( श्रुत्वा सहर्षं परिवृत्य सस्पृहं पश्यन्ती ) कहं अअं सो राजा उदयणो जस्स अहं तादेण दिण्णा ता परप्पेसणदूसिदं मे जीविदं एतस्स दंसणेण बहुमदं संजादम्[१]" इति सागरिकायाः सुखागमात् प्राप्तिरिति। As also in the Ratnavali— "Sagarika—( hearing and turning about and seeing the King with ardent desire ) Why! That is the King Udayana, to whom I am given by my father ( in betrothal ). Now my life, which is spoiled by the slavery of others is highly prized by my seeing him. With this passage, the author ( of the Ratnavali ) shows that Sagarika obtains happiness and it is also therefore a प्राप्ति.

अथ समाधानम्। Now the समाधान is defined.

(45) **बीजागमः समाधानम्**

The support of the purpose is called समाधान।[२]

यथा रत्नावल्याम्—"वासवदत्ता–तेण हि उवणेहि मे उवअरणाइं ( तेन ह्युपनय मे उपकरणानि )। सागरिका–भट्टिणि एदं सव्वं सज्जं ( भर्त्रि, एतत्सर्वं सज्जम् )। वासवदत्ता—( निरूप्यात्मगतम् ) अहो पमादो परिअणस्स जस्स एव्व दंसणपहादो पअत्तेण रक्खीअदि तस्स ज्जेव कहं दिट्ठिगोअरं आअदा। भोदु एवं दाव ( प्रकाशम् ) हञ्जे सागरिए, कीस तुमं अज्ज पराहीणे परिअणे मअणूसवे सारिअं मोत्तूण इहागदा ता तहिं ज्जेव गच्छ ( अहो प्रमादः परिजनस्य यस्यैव दर्शनपथात्प्रयत्नेन परिरक्ष्यते तस्यैव कथं दृष्टिगोचरमागता। भवतु एवं तावत्। चेटि, सागरिके, कथं त्वमद्य पराधीने परिजने मदनोत्सवे सारिकां मुक्त्वेहागता तत्तत्रैव गच्छ )" इत्युपक्रमे "सागरिका ( स्वगतम् ) सारिआ दाव मए सुसंगदाए हत्थे समप्पिदा पेक्खिदुं च मे कुतूहलं ता अलक्खिआ पेक्खि-

१ ( कथमयं स राजा उदयनो, यस्मै अहं तातेन दत्ता तत्परप्रेषणदूषितं मे जीवितमेतस्य दर्शनेन बहुमतं संजातम् )

२ "बीजार्थस्योपगमनं समाधानमपीष्यते" Bha. XXI. 74.

"बीजस्यागमनं यत्तु तत्समाधानमुच्यते" S. D. VI. 85.

स्सम् ।" इत्यनेन वासवदत्ताया रत्नावलीवत्सराजयोर्दर्शनप्रतीकारात्सारिकायाः सुसङ्गतार्पणेनालक्षितप्रेक्षणे न च वत्सराजसमागमहेतोर्बीजस्योपादानात्समाधानमिति । As for example, in the Ratnavali—"Vasavadatta—Then bring me the materials ( for the worship ). Sagarika–Your Majesty, here is everything ready. Vasavadatta–( Looking at Sagarika—to herself ) Oh ! This is the carelessness of our servants. She will come within the reach of the sight of that very person, from whose eyes she is carefully kept. Well, it will be so then, ( aloud ) My dear Sagarika why did you set free the Sarika ( a bird ) and come here to day when all my attendents are not free ( have no time ) to look after her, for today is the मदनोत्सव ( a festival celebrated to please the god of love ). Go therefore there." Beginning with this and ending with. "Sagarika ( to herself ) I already have handed Sarika to Susangata ( the bird is safe ). I have the curiosity ( to see the festival ). I will see therefore unseenly. " This is समाधान; for Vasavadatta's keeping Vatsaraja and Sagarika from each other's sight and Sagarika's handing over Sarika to Susangata and seeing the festival unseenly suggests the बीज which is the cause of the union of Vatsaraja and Ratnavali. It is therefore a समाधान.

यथा च वेणीसंहारे—"भीमः—भवतु पाञ्चालराजतनये, श्रूयताम् अचिरेणैव कालेन—

चञ्चद्भुजभ्रमितचण्डगदाभिघातसञ्चूर्णितोरुयुगलस्य सुयोधनस्य ।
स्त्यानावनद्धघनशोणितशोणपाणिरुत्तंसयिष्यति कचांस्तव देवि भीमः ॥"

इत्यनेन वेणीसंहारहेतोः क्रोधबीजस्य पुनरुपादानात्समाधानम् । As also in the Venisamhara,—"Bhima, O Lady, Daughter of the King of Panchala ( Draupadi ), hear me, ( you will see ), before long, that Bhima, whose hands are red with greasy, muddy and thick

blood of Suyodhana whose both thighs are pulverised by the violent stroke of the mace which is violated with moving arms, will decorate the hair." In this passage is a समाधान for the anger ( of Bhima ), the cause of the tying of hair ( of Draupadi ) into one braid, is repeated.

अथ विधानम् Now the author defines the विधान.

(46) विधानं सुखदुःखकृत् ।

The passage ( or acting ) which gives both the happiness and pain is called विधान ।[1]

यथा मालतीमाधवे प्रथमेऽङ्के ।—"माधवः—
यान्त्या मुहुर्वलितकन्धरमाननं तदावृत्तवृन्तशतपत्रनिभं वहन्त्या ।
दिग्धोऽमृतेन च विषेण च पक्ष्मलाक्ष्या गाढं निखात इव मे हृदये कटाक्षः ॥
यद्विस्मयस्तिमितमस्तमितान्यभावमानन्दमन्दममृतप्लवनादिवाभूत् ।
तत्संनिधौ तदधुना हृदयं मदीयमङ्गारचुम्बितमिव व्यथमानमास्ते ॥"

इत्यनेन मालत्यवलोकनस्यानुरागस्य समागमहेतोर्बीजानुगुण्येनैव माधवस्य सुखदुःखकारित्वाद्विधानमिति । As for example, in the first act of the Malatimadhava,—"Madhava—When she ( Malati ) was going away, she whose face is lotuslike and circular and whose eye lashes are long and beautiful, turned round her neck again and again and planted heavily ( as a stake ) her glance, which was as it were smeared with nectar and poison, in my heart." "My heart which was, when at her presence, paralysed with astonishment; and from which all other feelings had vanished away and which was stupified by the happiness ( of seeing her ) as if it was bathed in the ( tank of ) nectar is now paining as if it is touched with a burning charcoal."

---

१ "सुखदुःखकृतो योऽर्थस्तद्विधानमिहोच्यते" Bha. XXI. 75.
"सुखदुःखकृतो योऽर्थस्तद्विधानमिति स्मृतम् " S. D. VI. 85.

By this, the poet shows the seed of love which is caused by Madhava's seeing Malati and which is mingled with Madhava's happiness and pain and which is the cause of the unity of Malati and Madhava. It is therefore a विधान.

यथा च वेणीसंहारे—"द्रौपदी—णाध पुणोवि तुम्हेहिं अहं आअच्छिअ समासासिदव्वा । ( नाथ पुनरपि युष्माभिरहमागत्य समाश्वासयितव्या ) । भीमः—ननु पाञ्चालराजतनये किमद्याप्यलीकाश्वासनेन—

भूयः परिभवक्लान्तिलज्जाविधुरिताननम् ।
अनिःशेषितकौरव्यं न पश्यसि वृकोदरम् ॥"

इति सङ्ग्रामस्य सुखदुःखहेतुत्वाद्विधानमिति । As also in the Venisamhara:—"Draupadi—My Lord ! I will be cheered up by you after coming from the battlefield. Bhima—O, the daughter of the King of Panchala ! What is the use of the verbal ( false ) cheering up ? Listen—you will not see Bhimasena again, whose face is ashamed on account of fatigue and disgrace, and who has not despatched all the Kauravas." Here, in this verse, are shown the happiness ( of would be victory ) and the pain of battle. [ The pain is on account of the danger of battle and the happiness on account of the hope of Victory. Both are in the mind of Draupadi. ]

अथ परिभावना । Now the परिभावना is defined.

(47) **परिभावोऽद्भुतावेशः ।**

The supernatural influence is called **परिभावना ।**[१]

यथा रत्नावल्याम्—"सागरिका—( दृष्ट्वा सविस्मयम् ) कथं पच्चक्खो ज्जेव अणंगो पूअं पडिच्छेदि ता । अहं पि इह ट्ठिता ज्जेव णं पूजइस्सं ( कथं प्रत्यक्ष एवानङ्गः पूजां प्रतिच्छेदि ता । अहमपीहस्थितैवैनं पूजयिष्यामि )" इत्यनेन वत्सराजस्यानङ्गरूपतयापह्नवादनङ्गस्य च प्रत्यक्षस्य

१ "कौतूहलोत्तरावेशो भवेत्तु परिभावना" Bha. XXI. 75.
"कुतूहलोत्तरा वाचः प्रोक्ता तु परिभावना" S. D. VI. 86.

पूजाग्रहणस्य लोकोत्तरत्वादद्भुतरसावेशः परिभावना। As for example in the Ratnavali,—"Sagarika—( seeing with amazement ) Why the god of love is real and takes ( accepts ) the worship ( of his devotees ). I will also worship him though staying here ( at some distance from him )." In this passage, Vatsaraja is shown in the form of the god of love who, pretended to be visible and his accepting the worship directly has created the influence of supernatural sentiment and therefore it is a परिभावना.

यथा च वेणीसंहारे—"द्रौपदी—किं दाणीं एसो पलअजलधरत्थणिदमंसलो खणे खणे समरदुंदुभी ताडीअदि। ( किमिदानीमेष प्रलयजलधरस्तनितमांसलः क्षणेक्षणे समरदुन्दुभिस्ताड्यते )" इति लोकोत्तरसमरदुन्दुभिध्वनेर्विस्मयरसावेशाद् द्रौपद्याः परिभावना। As also in the Venisamhara—"Draupadi—What now, the kettledram of battle, the sound of which is as rumbling as that of the thundering cloud, at the time of the world destruction, is beaten again and again". Here, the supernatural sentiment arises in the mind of Draupadi and this passage therefore is a परिभावना.

[ Here the commentator should have mentioned the अद्भुतरस as he mentioned in the former example, for there is no विस्मयरस in the sanskrit literature. If the derivations are—विस्मयोत्पन्नो रसो विस्मयरसः or विस्मयस्य रसो विस्मयरसः etc. ; there will be क्लिष्टकल्पना and one will write रतिरस etc. also. Moreover this Dhanika's example is not appropriate, for nothing is supernatural in the above passage. Such similes as given above will be found in many places in the Sanskrit literature and they cannot be said as expressive of the अद्भुत रस. The verse 'मन्थायस्तार्णवाम्भः—could be said to answer the purpose of the अद्भुतरस to some degree. ]

अथ उद्भेदः । The उद्भेद is defined now.

(48) **उद्भेदो गूढभेदनम् ।**

When a hidden or concealed thing becomes open or comes to light, it is called उद्भेद ।[1]

यथा रत्नावल्याम्—वत्सराजस्य कुसुमायुधव्यपदेशेन गूढस्य वैतालिकवचसा–'अस्तापास्त' इत्यादिना 'उदयनस्य' इत्यन्तेन बीजानुगुण्येनैवोद्भेदनादुद्भेदः ।

As for example ; in the Ratnavali—When Vatsaraja was known as the god of love ( to Sagarika ) and is suddenly known by her as himself, at the reciting of the verse, which begins with 'अस्तापास्त' and concluded 'उदयनस्य' by the bard. ( in the passage of the Ratnavali ) It also is supported by the बीज as it supports the बीज and therefore is an उद्भेद.

यथा च वेणीसंहारे—"आर्य किमिदानीमध्यवस्यति गुरुः" इत्युपक्रमे—( नेपथ्ये )

यत्सत्यव्रतभङ्गभीरुमनसा यत्नेन मन्दीकृतं
यद्विस्मर्तुमपीहितं शमवता शान्तिं कुलस्येच्छता ।
तद्द्यूतारणिसम्भृतं नृपसुताकेशाम्बराकर्षणैः
क्रोधज्योतिरिदं महत्कुरुवने यौधिष्ठिरं जृम्भते ॥ भीमः—जृम्भतां जृम्भतां सम्प्रत्यप्रतिहतमार्यस्य क्रोधज्योतिः ।" इत्यनेनच्छन्नस्य द्रौपदीकेशसंयमनहेतोर्युधिष्ठिरक्रोधस्योद्भेदनादुद्भेदः ॥ And also, in the Venisamhara—"( Bhima ) Sir, what our Lord ( युधिष्ठिर ) determines now ?." Beginning with this and ending in "( Behind the scenes ). Now this fire of Yudhisthira's anger, which was, for a long time, checked, by him with great efforts, because he was afraid of the breach of his vow of truthfulness, and which was even wished to forget ( by Yudhi-

---

१ "बीजार्थस्य प्ररोहो य उद्भेदस्तु कीर्तितः" Bha. XXI. 76.
"बीजार्थस्य प्ररोहः स्यादुद्भेदः" S. D. VI. 86.

sthira ), who was desirous of the welfare of the family ( of his own and of his cousin brothers ), and that very fire which was prepared in the Arani ( See App. ) of gambling dice, by pulling the hair and the clothes of the King's daughter ( Draupadi ), expands in the great forest of the Kurus (Kauravas). Bhima—Expand ! expand, the fire of the anger of Yudhisthira, now unchecked." By this passage, Yudhisthira's anger, which was hidden and which was the cause of the bringing together the hair of Draupadi has appeared and it is an उद्भेद.

[ The better example of the उद्भेद will be as following :—

"राजा—भव हृदय साभिलाषं सम्प्रति सन्देहनिर्णयो जातः ।

आशङ्कसे यदग्निं तदिदं स्पर्शक्षमं रत्नम् ॥ [ O my heart ! be hopeful. Now the doubts are removed. The thing which you believed to be fire is a jewel which can be touched with delight." Shakuntala I. 24. Here the unknown or doubtful thing was known to the King and it is an उद्भेद. And also–"राजा—तदहमेनामनृणां करोमि ( इत्यङ्गुलीयं ददाति । उभे नाममुद्राक्षराण्यनुवाच्य परस्परमवलोकयतः ) । King—I therfore repay her debts to you ( he gives his ring. Both the friends of Shakuntala read the letters of his name, that are engraved in the ring, and look at eachother )." Here his being the King was not known to Shankuntala's friends. By seeing the name of the King, they knew that person who was conversing with them was the King. It is therefore an उद्भेद. ]

अथ करणम् । Now the author defines the करण.

(49) **करणं प्रकृतारम्भः ।**

The formation or the suggestion of the future story is called करण।[1]

यथा रत्नावल्याम् "णमो दे कुसुमाउह, ता अमोहदंसणो मे भविस्ससि त्ति। दिट्ठं जं पेक्खिदव्वं ता जाव ण कोवि मं पेक्खइ ता गमिस्सं" As in the Ratnavali—"My obeisance to the god whose weapons are of flowers ( the god of love ). May my seeing you be unfailing ( in fulfilling my hopes ). I have seen what was worth seeing. I must go now lest somebody will see me ( here )." By this, the story of Vatsaraja by Ratnavali, without any obstacle, which is to be shown in the next act, is suggested and it is therefore a करण.

यथा च वेणीसंहारे "तत्पाञ्चालि गच्छामो वयमिदानीं कुरुकुलक्षयाय। सहदेवः—आर्य गच्छाम इदानीं गुरुजनानुज्ञाता विक्रमानुरूपमाचरितुम्" इत्यनेनानन्तराङ्कप्रस्तूयमानसङ्ग्रामारम्भणात् करणम्। As also in the Venisamhara-"O Panchali ( Draupadi, ) ! We therefore go to the destruction of the family of the Kauravas. Sahadeva—Sir, now we are given permission by our elders and we go to act what is worthy of our heroism." By this, the story of the battle which will be shown in the next act is suggested and hence it is a करण.

सर्वत्र चेहोद्देशप्रतिनिर्देशवैषम्यम्। क्रियाक्रमस्याविवक्षितत्वात्। In all these करणs (?) the subjects and the predicates are unequal and their order is not intended to be said. [ Here this passage seems to be out of place. It must be placed after all the मुखाङ्गs are defined and their examples are shown. ]

अथ भेदः Now the भेद is defined.

---

१ "प्रकृतार्थसमारम्भं करणं परिचक्षते" Bha. XXI. 76.
"करणं पुनः प्रकृतार्थसमारम्भः" S. D. VI. 86-87.

(78) तोटकस्यान्यथाभावं ब्रुवतेऽधिबलं बुधाः ॥

The opposite sense of तोटक (i. e. the conciliation) is termed as अधिबल, by the learned persons.

यथा रत्नावल्याम्—"राजा—देवि एवमपि प्रत्यक्षदृष्टव्यलीकः किं विज्ञापयामि—

आताम्रतामपनयामि विवर्ण एष
लाक्षाकृतां चरणयोस्तव देवि मूर्ध्ना ।
कोपोपरागजनितां तु मुखारविन्दे
हर्तुं क्षमो यदि परं करुणा मयि स्यात् ।"

As for example in the Ratnavali, "King—My queen, what can I say now? when my fault is evident. Being myself ashamed ( lit. colourless ) I am ready to remove the red colour of the lac from the soles of your feet, by means of ( the rubbing ) my forehead on them. But I can remove the red colour of your face, which is on account of your being angry with me, only if you show your kindness to me."

(79) संरब्धवचनं यत्तु तोटकं तदुदाहृतम् ॥ ४१ ॥

The तोटक is an agitated speech which contains the harsh words. [ This definition of the तोटक does not differ from that of the तोटक given above. ]

यथा रत्नावल्याम्—"राजा—प्रिये, वासवदत्ते, प्रसीद प्रसीद । वासवदत्ता–(अश्रूणि धारयन्ती) अज्जउत्त मा एवं भण। अण्णसंकंताइं एदाइं अक्खराइं" As for example in the Ratnavali, "King—My darling Vasavadatta, be pleased, be pleased. Vasavadatta—(having tears in her eyes) My Lord, do not speak so. These letters (i. e. the word 'darling') are gone to another." यथा च वेणीसंहारे—"राजा–अये सुन्दरक, कच्चित् कुशलमङ्गराजस्य ? पुरुषः—कुसलं सरीरमेत्तकेण ( कुशलं शरीरमात्रेण ) राजा—किं तस्य किरीटिना हता धौरेयाः क्षतः सारथिः

भग्नो वा रथः । पुरुषः—देव ण भग्गो रहो भग्गो से मणोरहो ( देव न भग्नो रथो भग्नोऽस्य मनोरथः । राजा—( ससम्भ्रमम् ) कथम्—" इत्येवमादिना संरब्धवचसा तोटकमिति । As also in the Venisamhara, "King—O Sundaraka, is the King of the Angas ( i. e. Karna ) well ? Man—well only in his body ( i. e. his body is unhurt as yet. ) King—Why ? Are the horses of his chariot killed by Arjuna, is his charioteer slain ? or is his choriot destroyed (broken) ? Man—His chariot is not destroyed, but his hope ( of victory ) is destroyed. King—(with agitation ) How ?" The तोटक is shown in this agitated speech. [ Both the examples of तोटक, given here are not suitable, for the former is not a संरब्धवचन but a सोल्लुण्ठवचन ( ironical speech ) while the latter is mere the exordiam of the sorrowful speech. The example of तोटक given in the Sahitya Darpana is more suitable. ] अथोद्वेगः Now the author defines the उद्वेग.

(80) **उद्वेगोऽरिकृता भीतिः ।**

The fear of an enemy or the fearful action of an enemy is called उद्वेग. ।[१]

यथा रत्नावल्याम्—"सागरिका—( आत्मगतम् ) कहं अकिद्पुण्णेहिं अत्तणो इच्छाए मरिउं पि ण पारीअदि ( कथमकृतपुण्यैरात्मन इच्छया मर्तुमपि न पार्यते )" इति वासवदत्तातः सागरिकाया भयमित्युद्वेगः । यो हि यस्यापकारी स तस्यारिः । As for example in the Ratnavali, "Sagarika—How the persons who have not done righteous deeds ( in their previous birth ) can not even die at their own will. ( I am the best example of this. )" In this, Sagarika's fear of Vasavadatta is shown and therefore it is an उद्वेग.

१ "भयं नृपारिदस्यूत्थमुद्वेगः परिकीर्त्तितः" Bha. XXI. 90.
"नृपादिजनिता भीतिरुद्वेगः परिकीर्त्तितः" S. D. VI. 100.

( Though personally, Vasavadatta is not an enemy of Sagarika, yet ) the person who injures the desire of any one or harms anyone is his ( or her ) enemy ( and she is her enemy for she obstructs the relation between the King and Sagarika. ) यथा च वेणीसंहारे "सूतः—( श्रुत्वा सभयम् ) कथमासन्न एवासौ कौरवराजपुत्रमहावनोत्पातमारुतो मारुतिरनुपलब्धसंज्ञश्च महाराजः। भवतु दूरमपहरामि स्यन्दनम्। कदाचिदनार्यो दुःशासन इवास्मिन्नप्यनार्यमाचरिष्यति।" इत्यरिकृता भीतिरुद्वेगः। As also in the Venisamhara, "Charioteer—( hearing and fearfully ) How the son of ( the god of the ) wind ( i. e. Bhimasena) who is like the wind of calamity in the great forest ) ( the large family ) of the Royal Kuaravas, is near now and His Majesty has not yet regained his consciousness. Well, I will drive away this chariot. He ( Bhima ) may practise some evil upon His Majesty, as he did upon Dusshasana. This is the fear coming from Bhimasena and it is also an उद्वेग. अथ सम्भ्रमः। Now the सम्भ्रम is defined.

(8.) शङ्कात्रासौ च सम्भ्रमः।

The सम्भ्रम is the part of plot, in which an alarm and a terror are shown.

यथा रत्नावल्याम्—"विदूषकः—( पश्यन् ) का उण एसा ( का पुनरेषा ) ( ससंभ्रमम् ) कथं देवी वासवदत्ता अत्ताणं वावादेति (कथं देवी वासवदत्ताऽऽत्मानं व्यापादयति )। राजा—( ससंभ्रममुपसर्पन् ) कासौ कासौ" इत्यनेन वासवदत्ताबुद्धिगृहीतायाः सागरिकाया मरणशङ्कया सम्भ्रम इति। As in the Ratnavali, "Clown—( seeing ) who is that ? ( with alarm ) How queen Vasavadatta kills herself. King—( alarmed and approaching ) Where is she. Where is she." By this, the danger of the life of Sagarika, who is disguised

१ Bharata and Vishwanath a term it as विद्रव.

as Vasavadatta and mistaken for her, is supposed and it is a सम्भ्रम. यथा च वेणीसंहारे "( नेपथ्ये कलकलः )— अश्वत्थामा—( ससम्भ्रमम् ) मातुल, मातुल, कष्टम् ! एष भ्रातुः प्रतिज्ञाभङ्गभीरुः किरीटी समं शरवर्षैर्दुर्योधनराधेयावभिद्रवति । सर्वथा पीतं शोणितं दुःशासनस्य भीमेन।" तथा—"( प्रविश्य सम्भ्रान्तः सप्रहारः सूतः ) त्रायतां ! त्रायतां ! ! कुमारः " इति त्रासः । इत्येताभ्यां शङ्कात्रासाभ्यां दुःशासनद्रोणवधसूचकाभ्यां पाण्डवविजयप्राप्त्याशान्वितः सम्भ्रम इति । As also in the Venisamhara, " ( Noise behind the scene ). Ashwatthama—( agitated ) Uucle, my uncle, alas ! Arjuna attacks Duryodhana and Karna together with a shower of arrows, for he fears the falsification of his brothers (of Bhima's) promise ( of drinking the blood from the chest of Dusshasana ). It is evident that the blood of Dusshasana is now drunk by Bhima." This is a शङ्का ( See App.). And "Charioteer—( entering agitatedly and wounded). My young master, save me. Save me." This is a fear (or terror). By these शङ्का and त्रास, that foreshow the victory of the Pandavas, the सम्भ्रम is shown.

अथाक्षेपः Now the author defines the आक्षेप ।

(82) **गर्भबीजसमुद्भेदादाक्षेपः परिकीर्त्तितः ॥४२॥**

When the manifestation of the गर्भ and बीज is suggested in a passage, it is called the आक्षेप. [1]

यथा रत्नावल्याम्—"राजा—वयस्य देवीप्रसादनं मुक्त्वा नान्यमत्रोपायं पश्यामि ।" पुनः क्रमान्तरे "सर्वथा देवीप्रसादनं प्रति निष्प्रत्याशी-

"नृपाग्निभयसंयुक्तः सम्भ्रमो विद्रवः स्मृतः" Bha. XXI. 91.
"शङ्काभयत्रासकृतः संभ्रमो विद्रवो मतः" S. D. VI. 91 100.

१ Bharata terms it as आक्षिप्त. "गर्भस्योद्भेदनं यत्तु तदाक्षिप्तमिति स्मृतम्" XXI. 89.
Vishwanatha terms it a क्षिप्ति. "रहस्यार्थस्य तूद्भेदः क्षिप्तिः स्यात्" S. D. VI. 99.

भूताः स्मः ।' पुनः "तत्किमिह स्थितेन ? देवीमेव गत्वा प्रसादयामि ।" इत्यनेन देवीप्रसादायत्ता सागरिकासमागमसिद्धिरिति गर्भबीजोद्भेदादाक्षेपः । As for example in the Ratnavali, "King—My friend, there is no remedy but to conciliate the queen." Again in another context, "I have given up the hope of the conciliation of the queen." By these passages, it is shown that the success in obtaining Sagarika depends upon the conciliation of the queen. This is the manifestation of the गर्भ and बीज and consequently it is an आक्षेप.

यथा च वेणीसंहारे—"सुन्दरकः—अहवा किमेत्थ देव्वं उआलहामि । तस्स क्खु एदं णिब्भच्छिदविदुरवअणबीअस्स, परिभूदपिदामहहिदोपदेसंकुरस्स, सउणिप्पोच्छाहणारूढमूलस्स, कूडविससाहिणो, पंचालीकेसग्गहणकुसुमस्स फलं परिणमेदि—(अथवा किमत्र दैवमुपालभे । तस्य खल्वेतन्निर्भर्त्सितविदुरवचनबीजस्य, परिभूतपितामहहितोपदेशाङ्कुरस्य, शकुनिप्रोत्साहनारूढमूलस्य, कूटविषशाखिनः पाञ्चालीकेशग्रहणकुसुमस्य फलं परिणमति )" इत्यनेन बीजमेव फलोन्मुखतयाऽऽक्षिप्यत इत्याक्षेपः । As also in the Venisamhara, "Sundaraka—Now, why should I blame the fate ? This is the ripening of the fruit ( of the tree ), the seed of which was reviling the speech of Vidura, the sprout of which was disrespecting the good advice of the grand-father ( Bhishma ), the development of the roots of which was the encouragement of Shakuni, the branches of which were the tricks and poisoning and the flowers of which were taking ( pulling ) the hair of Panchali ( Draupadi )." By this, the बीज which is about to be manifested is suggested and therefore it is an आक्षेप.

एतानि द्वादश गर्भाङ्गानि प्राप्त्याशाप्रदर्शकत्वेनोपनिबन्धनीयानि । एषां च मध्येऽभूताहरणमार्गतोटकाधिबलाक्षेपाणां प्राधान्यम् । इतरेषां यथासम्भवं प्रयोग इति साङ्गो गर्भसन्धिरुक्तः । These are the twelve गर्भाङ्गs. They must be in a drama, because

they indicate the hope of obtaining the result of the plot. Of these also, अभूताहरण, मार्ग, तोटक, अधिवल and आक्षेप are chief ( i. e. compulsory ). The others should be placed according to possibility and necessity. Thus, the गर्भसन्धि and its auxiliary parts are defined.

अथावमर्शः Now the अवमर्श is defined.

(83) क्रोधेनावमृशेद्यत्र व्यसनाद्वा विलोभनात् ।
गर्भनिर्भिन्नबीजार्थः सोऽवमर्श इति स्मृतः ॥४३॥

( Its translation is given below in that of the commentary of Dhanika ) अवमर्शनमवमर्शः पर्यालोचनम् । अवमर्श means to meditate upon something. तच्च क्रोधेन वा व्यसनाद्वा विलोभनेन वा । It can be here, on account of the wrath, misery or enticement. भवितव्यम्–अनेनार्थेनेत्यवधारितैकान्तफलप्राप्त्यवसायात्मा गर्भसन्ध्युद्भिन्नबीजार्थसंबन्धो विमर्शोऽवमर्शः । The अवमर्श is which completes the certainty of success and which connects the गर्भसन्धि at the end and manifests the object of the बीज.

यथा रत्नावल्याम् चतुर्थेऽङ्केऽग्निविद्रवपर्यन्तो वासवदत्ताप्रसत्त्या निरपायरत्नावलीप्राप्त्यवसायात्माऽवमर्शो दर्शितः । As for example in the Ratnavali, the अवमर्श is shown in its fourth act, in the form of the story which ends in the panic on account of the breaking of the (illusory ) fire and the safe obtaining of Ratnavali through the favour of Vasavadatta. यथा च वेणीसंहारे दुर्योधनरुधिराक्तभीमसेनागमपर्यन्तः ।

"तीर्णे भीष्ममहोदधौ कथमपि द्रोणानले निर्वृते
कर्णाशीविषभोगिनि प्रशमिते शल्ये च याते दिवम् ।
भीमेन प्रियसाहसेन रभसादल्पावशेषे जये
सर्वे जीवितसंशयं वयममी वाचा समारोपिताः ॥

इत्यत्र "अल्पावशेषे जये" इत्यादिभिर्विजयप्रत्यर्थिसमस्तभीष्मादिमहारथवधादवधारितैकान्तविजयावमर्शनादवमर्शनं दर्शितमित्यवमर्श-

सन्धिः। And also in the Venisamhara, the story ending in the coming of Bhimasena, sprinkled (lit. wet) with the blood of Duryodhana and "Bhima, who is fond of adventures, has thrown us all in the doubt of our lives, through his words, when very little remains to complete the Victory, for, the great ocean in the form of Bhishma is somehow crossed, the fire in the form of Drona is put out, the poisonous snake in the form of Karna is killed and Shalya also is gone to heaven." In this passage, "when very little remains to complete the victory" suggests the certainty of victory, for its obstructionists, who were great warriors like Bhishma, Drona and others were killed. It is therefore an अवमर्शसन्धि.

तस्याङ्गसङ्ग्रहमाह। Now the author names its (of गर्भसन्धि) auxiliary divisions.

(84) तत्रापवादसंफेटौ विद्रवद्रवशक्तयः।
द्युतिः प्रसङ्गश्छलनं व्यवसायो विरोधनम् ॥४८॥
प्ररोचना विचलनमादानं च त्रयोदश।

They are thirteen, viz. (1) अपवाद (2) संफेट (3) विद्रव (4) द्रव (5) शक्ति (6) द्युति (7) प्रसङ्ग (8) छलन (9) व्यवसाय (10) विरोधन (11) प्ररोचना (12) विचलन and (13) आदान.[1]

यथोद्देशं लक्षणमाह। Now the author defines them according to their order—

(85) दोषप्रख्याऽपवादः स्यात्।

To declare or express one's blemish is called the अपवाद.[2]

---

१ Bha. XXI. 65–66.
S. D. VI. 101-102.

२ "दोषप्रख्यापनं यत्स्यात् सोपवादः प्रकीर्त्तितः" Bha. XXI. 91.
"दोषप्रख्याऽपवादः स्यात्" S. D. VI. 102.

यथा रत्नावल्याम्, "सुसङ्गता—सा क्खु तवस्सिणी भट्टिणीए उज्जइणिं णीअदि त्ति पवादं करिअ उवत्थिदे अद्धरत्ते ण जाणीअदि कहिं पि णीदेत्ति। (सा खलु तपस्विनी भट्टिन्योज्जयिनीं नीयत इति प्रवादं कृत्वोपस्थितेऽर्धरात्र न ज्ञायते कुत्रापि नीतेति)। विदूषकः—(सोद्वेगम्) अदिणिग्घिणं कदं क्खु देवीए (अतिनिर्घृणं कृतं खलु देव्या)" पुनः "भो वअस्स सा क्खु देवीए उज्जइणिं पेसिदा अदो अप्पिअं ति कहिदं (भो वयस्य सा खलु देव्या उज्जयिनीं प्रेषिता अतोऽप्रियमिति कथितम्)। राजा—अहो निरनुरोधा मयि देवी।" इत्यनेन वासवदत्तादोषप्रख्यापनादपवादः। As for example in the Ratnavali, "Susangata—The poor girl is sent to some place, by the queen, under the pretext of sending her to Ujjaini. Clown—( alarmed ) The queen did this very mercilessly." Again—"Clown—My friend, do not think it otherwise. She is sent to Ujjaini by the queen and consequently it is a disagreeable ( information )." "King—The queen did not grant my request." Here, in this passage, the blemish of Vasavadatta is shown and therefore it is an अपवाद. यथा च वेणीसंहारे—"युधिष्ठिरः—कच्चित्समासादिता तस्य दुरात्मनः कौरवापसदस्य पदवी। पाञ्चालकः—न केवलं पदवी स एव दुरात्मा देवीकेशपाशस्पर्शपातकप्रधानहेतुरुपलब्धः।" इति दुर्योधनस्य दोषप्रख्यापनादपवाद इति। As in the Venisamhara also, "Yudhisthira—Panchalaka, did they find any trace of that wicked-minded ( Duryodhana ) who is an accursed man in the race of Kuru. Panchalaka—Not only his trace, but also he, who was the root cause of the touching of the hair of the queen ( Draupadi ) is found." The blemish of Duryodhana is shown in this passage and therefore it is an अपवाद.

अथ संफेटः Now the संफेट is defined.

(86) **संफेटो रोषभाषणम्।**

The angry speech is called संफेट.

यथा वेणीसंहारे—"भोः कौरवराज, कृतं बन्धुनाशदर्शनमन्युना।

मैवं विषादं कृथाः—पर्याप्ताः पाण्डवाः समरायाहमसहाय इति ।

पञ्चानां मन्यसेऽस्माकं यं सुयोधं सुयोधन ।
दंशितस्यात्तशस्त्रस्य तेन तेऽस्तु रणोत्सवः ॥

इति श्रुत्वाऽसूयात्मिकां निक्षिप्य कुमारयोर्दृष्टिमुक्तवान्धार्त्तराष्ट्रः ।—

कर्णदुःशासनवधात्तुल्यावेव युवां मम ।
अप्रियोऽपि प्रियो योद्धुं त्वमेव प्रियसाहसः ॥

इत्युत्थाय च परस्परक्रोधाधिक्षेपपरुषवाक्कलहप्रस्तारितघोरसङ्ग्रामौ—" इत्यनेन भीमदुर्योधनयोरन्योन्यरोषसम्भाषणाद्विजयबीजान्वयेन संफेट इति । As for example in the Venisamhara, "O King of the Kauravas, enough of the grief at the loss of the lives of brothers and relatives. Do not think that "the Pandavas are all alive and I am alone and they will defeat me." "O Suyodhana, choose any-one of us, whom you think of easy to combat and with him you will fight, fully armed and well equip-ped." Hearing this, the son of Dhritarastra ( Duryo-dhana ) threw a glance upon the two princes. ( i. e. Bhimsena and Arjuna ) and said to Bhimasena thus— "Both of you are my equal enemies for one of you ( Arjuna ) has killed Karna and the other ( Bhima ) has killed Dusshasana ; and yet you ( Bhima ) are the lover of adventures, I like ( prefer ) you to fight with, inspite of your being odious to me." Saying this and standing up, both, Bhima and Duryodhana began to exchange the ironical and harsh words and fight—". In these passages, the angry speeches of Duryodhana and Bhimasena are addressed to each other and they are in favour of the Victory of the Pandavas and consequently they are called the संफेट.

अथ विद्रवः Now the author defines the विद्रव.

(87) विद्रवो वधबन्धादिः ।

The passage, in which, there be killing or binding

or any frightful thing about any chief person, is called the विद्रव. यथा छलितरामे—

"येनावृत्य मुखानि साम पठतामत्यन्तमायासितं
बाल्ये येन हृताक्षसूत्रवलयप्रत्यर्पणैः क्रीडितम्।
युष्माकं हृदयं स एष विशिखैरापूरितांसस्थलः
मूर्च्छाघोरतमःप्रवेशविवशो बद्ध्वा लवो नीयते॥"

As for example in the Chhalitarama—"O Sages, ( your pet ) Lava, who, in his infancy gave you much troubles by turning about your faces when you used to recite the verses of the Samaveda, who used to play with you by taking away and giving back to you, your Rudraksha Mala and who is as dear to you as your own life ( lit. heart ), is now helpless on account of the senselessness. His shoulders are full with ( the wounds of ) the arrows. He is swooned now and is bound by his adversaries. They are taking him away."

यथा च रत्नावल्याम्। And also, as in the Ratnavali :—

"हर्म्याणां हेमशृङ्गश्रियमिव शिखरैरर्चिषामाददानः
सान्द्रोद्यानद्रुमाग्रग्लपनपिशुनितात्यन्ततीव्राभितापः।
कुर्वन् क्रीडामहीध्रं सजलजलधरश्यामलं धूमपातै-
रेष प्लोषार्त्तयोषिज्जन इह सहसैवोत्थितोऽन्तःपुरेऽग्निः॥"

इत्यादि। पुनः—"वासवदत्ता—अज्जउत्त, ण क्खु अहं अत्तणो कारणादो भणामि। एसा मए णिग्घणहिअआए संजदा सागरिआ विवज्जइ। ( आर्यपुत्र न खल्वहमात्मनः कारणाद्भणामि। एषा मया निर्घृणहृदयया संयता सागरिका विपद्यते )" इत्यनेन सागरिकावधबन्धाग्निभिर्विद्रव इति। "This fire,—which is destroying the beauty of the palaces, with its high flames, the violent heat of which is indicated by the fading of the branches of the trees of thick gardens, which is making the artificial hill as black as the clouds, full of water, by throwing the smoke on it ; and which,

makes the burning females (of the palace and garden) very distressed,—rises very high." And again—"Vasavadatta—My Lord, I do not speak any thing about my safety, but Sagarika who is confined by me with my very cruel heart, is being perished." In this passage, the ( supposed ) burning ( to death ) of Sagarika and breaking of ( the artificial ) fire is shown and it is therefore a विद्रव.[1]

अथ द्रवः Now the author defines the द्रव.

(88) द्रवो गुरुतिरस्कृतिः ॥ ४५ ॥

The insult ( either literally or suggestively ) of great persons is called द्रव. यथोत्तररामचरिते—

"वृद्धास्ते न विचारणीयचरितास्तिष्ठन्तु हुं वर्त्ततां
सुन्दस्त्रीदमनेऽप्यखण्डयशसो लोके महान्तो हि ते ।
यानि त्रीण्यकुतोभयानि चरितान्यासन् खरायोधने
यद्वा कौशलमिन्द्रसूनुदमने तत्राप्यभिज्ञो जनः ॥"

इत्यनेन लवो रामस्य गुरोस्तिरस्कारं कृतवानिति द्रवः । As for example in the Uttararamacharita—"He (Rama) is a great and venerable person, and his deeds must remain uncriticized. He killed the wife of Sunda ( Tadaka ). Even so, his fame remained unspotted, ( unlessened ) for he is a great man in the world. Every one knows how three steps were fearlessly taken in the battle with Khara ( it is spoken ironically for the author of the Ramayana says that Rama stepped back then ). That trick also, which was played when the son of Indra ( Bali ) was killed, is well known in the world." In this verse, the insult of Rama is shown and therefore it is a द्रव. यथा च वेणीसंहारे—

युधिष्ठिरः—भगवन्, कृष्णाग्रज, सुभद्राभ्रातः—
"ज्ञातिप्रीतिर्मनसि न कृता क्षत्रियाणां न धर्मः

१ "गुरुव्यतिक्रमो यस्तु विज्ञेयो विद्रवस्तु सः" Bha. XXI. 93.

रूढं सख्यं तदपि गणितं नानुजस्यार्जुनेन ।
तुल्यः कामं भवतु भवतः शिष्ययोः स्नेहबन्धः
कोऽयं पन्था यदसि विगुणो मन्दभाग्ये मयि त्वम् ॥"

इत्यादिना बलभद्रं गुरुं युधिष्ठिरस्तिरस्कृतवानिति द्रवः । As also in the Venisamhara—"Yudhisthira—O Lord (Balarama) the elder brother of Krishna, the brother of Subhadra, you did give room, in your mind, neither to love of relatives nor to the moral merits of the Kshatriyas. You did not mind the intimate friendship of your younger brother ( Krishna ) with Arjuna. Take it for granted that your love must be equal for your two disciples ( i. e. Duryodhana and Bhimsena ), but ( think ) what is the path ( manner ) you go through, when you are unpropitious to me who am now most unfortunate in the world." In this verse, Yudhisthira speaks ill of Balabhadra and it is a द्रव.

अथ शक्तिः Now the शक्ति is defined by the author.

(89) **विरोधशमनं शक्तिः ।**

To remove the hostility is called शक्ति.[१]

यथा रत्नावल्याम्, "राजा—

"सव्याजैः शपथैः प्रियेण वचसा चित्तानुवृत्त्याधिकं
वैलक्ष्येण परेण पादपतनैर्वाक्यैः सखीनां मुहुः ।
प्रत्यासत्तिमुपागता न हि तथा देवी रुदत्या यथा
प्रक्षाल्यैव तयैव बाष्पसलिलैः कोपोपनीतः स्वयम् ॥"

इत्यनेन सागरिकालाभविरोधिवासवदत्ताकोपोपशमनाच्छक्तिः ॥ As for example in the Ratnavali, "King—The queen did not approach me ( because she was too much angry with me ) even at my pretense of oaths, my conciliating speech, my acting according to her will and my affected bowing at her feet and with the

१ "विरोधोपगमो यस्तु सा शक्तिः परिकीर्तिता" Bha. XXI. 93.
"शक्तिः पुनर्भवेत् विरोधस्य प्रशमनम्" S. D. VI. 104.

speeches of her friends. But she came herself weeping and she was not angry, as if she washed away her anger with the water in the form of her tears." The anger of Vasavadatta which was the obstacle in obtaining Sagarika was pacified, as shown in this verse, it is therefore a शक्ति. यथा चोत्तररामचरिते—

"विरोधो विश्रान्तः प्रसरति रसो निर्वृतिघनः
तदौद्धत्यं क्वापि व्रजति विनयः प्रह्वयति माम् ।
झटित्यस्मिन्दृष्टे किमपि परवानस्मि यदि वा
महार्घस्तीर्थानामिव हि महतां कोऽप्यतिशयः ॥"

As also in the Uttararamacharita—"Just now, when I see him, our quarrel ceases, the feeling of love, which is full of happiness prevails, the arrogation, which I was full of, is gone. The humility subdued me and I am overwhelmed. Really speaking the superiority of, the great persons like that of the holy places is invaluable and is overpowering."

अथ द्युतिः Now the author defines द्युति.

(90) तर्जनोद्वेजने द्युतिः ।

To threaten and to trouble is called द्युति.

यथा वेणीसंहारे—"एतच्च वचनमुपश्रुत्य रामानुजस्य सकलदिङ्निकुञ्जपूरितातिरिक्तमुद्भ्रान्तसलिलचरसङ्कुलं त्रासोद्वृत्तनक्रग्राहमालोड्य सरःसलिलं भैरवं च गर्जित्वा कुमारवृकोदरेणाभिहितम् ।

"जन्मेन्दोरमले कुले व्यपदिशस्यद्यापि धत्से गदाम्
मां दुःशासनकोष्णशोणितसुराक्षीबं रिपुं भाषसे ।
दर्पान्धो मधुकैटभद्विषि हरावप्युद्धतं चेष्टसे
मन्त्रासान्नृपशो विहाय समरं पङ्केऽधुना लीयसे ॥"

इत्यादिना "त्यक्त्वोत्थितः सरभसम्" इत्यन्तेन दुर्वचनजलावलोडाभ्यां दुर्योधनतर्जनोद्वेजनकारिभ्यां पाण्डवविजयानुकूलदुर्योधनोत्थापनहेतुभ्यां भीमस्य द्युतिरुक्ता ॥ As for example in the Venisamhara—"Hearing these words of the younger brother of Rama (i. e. Krishna), Prince Bhimasena,—

having agitated the water, which was filled and overflowed from the bowers all around the lake, the hundreds of the aquatic animals of which were alarmed and the crocodiles and sharks of which came out suddenly and having thundered frighteningly,—spoke—

( O Duryodhana, ) you pretend to be born in the pure race of the moon. You still have your mace. You term me, who am under intoxication of the wine, in the form of the hot blood of Dusshasana as your enemy. You are blinded by vanity and you always act houghtily towards the enemy of Madhu and Kaitabha ( i. e. Krishna ). Now you are afraid of me and you leave the battle-field for the other Kings and you yourself are sunk here in the mud." These passages and in the end "He rose suddenly etc." and the harsh words of Bhimasena and his agitating the water frightened and threatened Duryodhana. These passages also are in favour of the victory of the Pandavas and therefore they are called द्युति.

अथ प्रसङ्गः Now the author defines प्रसङ्ग.

(91) गुरुकीर्त्तनं प्रसङ्गः ।

The description of ( or to mention ) one's ancestors is प्रसङ्ग.

यथा रत्नावल्याम्—"देव, यासौ सिंहलेश्वरेण स्वदुहिता रत्नावली नामायुष्मती वासवदत्तां दग्धामुपश्रुत्य देवाय पूर्वप्रार्थिता सती प्रतिदत्ता" इत्यनेन रत्नावल्या लाभाकूलाभिजनप्रकाशिना प्रसङ्गाद् गुरुकीर्त्तनेन प्रसङ्गः । As for example in the Ratnavali, "My Lord, that Ratnavali, who is the daughter of the King of Ceylon and who was given to your lordship by her father at my request and on hearing

that Vasavadatta has been burnt." In this passage, the description of Ratnavali's family and father, which is in favour of obtaining her ( by Vastaraja ) is shown, it is therefore a प्रसङ्ग । तथा च मृच्छकटिकायाम्—
"चाण्डालकः—यसो सागलदत्तस्स सुओ अज्जविणअदत्तस्स णत्तू चालुदत्तो वावादिदुं वज्झट्ठाणं णीअदि । एदेण किल गणिआ वसन्तसेणा सुवण्णलोभेण वावादिदा । ( एष सागरदत्तस्य सुत आर्यविनयदत्तस्य नप्ता चारुदत्तो व्यापादयितुं वध्यस्थानं नीयते । एतेन किल गणिका वसन्तसेना सुवर्णलोभेन व्यापादिता )– । चारुदत्तः—

मखशतपरिपूतं गोत्रमुद्भासितं यत्
सदसि निबिड़चैत्यब्रह्मघोषैः पुरस्तात् ।
मम निधनदशायां वर्त्तमानस्य पापैः
तदसदृशमनुष्यैर्घुष्यते घोषणायाम् ॥"

इत्यनेन चारुदत्तवधाभ्युदयानुकूलं प्रसङ्गाद् गुरुकीर्त्तनमिति प्रसङ्गः । So also in the Mrichchhakatika—"Excutioner—This Charudatta, the son of Sagaradatta and the grandson of noble Vinayadatta is being taken to the place of excution, to be excuted. He has killed a courtezan named Vasantasena for her gold ( ornaments ). Charudatta—The name of my family which, formerly used to be irradiated ( by the persons ) with the recital of the Vedas, in the crowded altars and was purified with the thousands of the sacrifices. Now, when I am about to die,—it ( my name with that of my family ) is announced by the unfit persons in the proclamation." By this passage, which shows the ( expected ) death of Charudatta, ( and in the end, his prosperity ) in the description of his ancestors ( See the criticism in the Sanskrit comm. ) on account of its being a प्रसङ्ग ( the subject of discourse ) it is also a प्रसङ्ग.[1]

---

१ "प्रसङ्गश्चैव विज्ञेयो गुरूणां परिकीर्त्तनम्" Bha. XXI. 94.
"प्रसङ्गो गुरुकीर्त्तनम्" S. D. VI. 104.

**अथ छलनम्** Now the **छलन** is defined.

(92) **छलनं चावमाननम् ।**

The contempt is called **छलन.**[1]

यथा रत्नावल्याम्—"राजा—अहो निरनुक्रोशा मयि देवी" इत्यनेन वासवदत्ताया इष्टासम्पादनाद्वत्सराजस्यावमाननाच्छलनम् । As for example in the Ratnavali, "King—Oh, the queen is pitiless on me." By this sentence, Vasavadatta is shown as an abstacle in the success of Vatsaraja and he speaks ill of her and therefore it is a **छलन.** यथा च रामाभ्युदये सीतायाः परित्यागेनावमाननाच्छलनमिति । And also in the Ramabhyudaya, Sita is deserted and consequently insulted, that also is therefore a **छलन.**

**अथ व्यवसायः** Now the author defines **व्यवसाय.**

(93) **व्यवसायः स्वशक्त्युक्तिः ।**

To speak about the supremacy of one's power is called **व्यवसाय.**[2]

यथा रत्नावल्याम्, "ऐन्द्रजालिकः—किं धरणीए मिअंको आआसे महीधरो जले जलणो । मज्झण्हम्मि पओसो दाविज्जउ देहि आणत्तिं । अहवा किं बहुणा जम्पिएण । मज्झ पइण्णा एसा भणामि हिअएण जं महसि दट्ठुं । तं ते दवेमि फुडं गुरुणो मन्तप्पहावेण ( किं धरण्यां मृगाङ्क आकाशे महीधरो जले ज्वलनः । मध्याह्ने प्रदोषो दर्श्यतां देह्याज्ञप्तिम् ॥ अथवा किं बहुना जल्पितेन । मम प्रतिज्ञैषा भणामि हृदयेन यद्वाञ्छसि द्रष्टुम् । तत्ते दर्शयामि स्फुटं गुरोर्मन्त्रप्रभावेण ॥" इत्यनेनैन्द्रजालिको मिथ्याग्निसम्भ्रमोत्थापितेन वत्सराजस्य हृदयस्थसागरिकादर्शनानुकूलां स्वशक्तिमाविष्करोति । As for example in the Ratnavali, "Juggler—Give me your order and you will be obeyed. What shall I show to

---

१ It seems to be probable that the **छादन** of Bharata and Vishwanatha is the **छलन** of Dhananjaya.

२ "व्यवसायस्तु विज्ञेयः प्रतिज्ञादोषसम्भवः" Bha. XXI. 94.
S. D. ( हेतुसम्भवः ) VI. 103.

you ? I can show you the moon upon the earth, the mountain in the sky, the fire in the water and even the evening twilight when it is broad noon. Or what is the use of my boasting too much ? This is my promise which I proclaim with my heart that I will show you whatever you want to see, by the virtue of my preceptor's spell–words which he tought me distinctly." By this, the Juggler who raises the artificial fire, shows his power, which helps Vatsaraja in seeing Sagarika who is in his heart. This passage therefore is a व्यवसाय. यथा च वेणीसंहारे—

"नूनं तेनाद्य वीरेण प्रतिज्ञाभङ्गभीरुणा ।
बध्यते केशपाशस्ते स चास्याकर्षणे क्षमः ॥"

As also in the Venisamhara, "Surely, the brave Bhimsena, who is afraid ( or ) ashamed of the non–fulfilment of his promise, will tie your hair today, for he is sufficient to kill him ( i. e. Duryodhana )." इत्यनेन युधिष्ठिरः स्वदण्डशक्तिमाविष्करोति । By this, Yudhisthira speaks about his ( i. e. of Bhima for the power of all the five brothers is considered to be one ) power and it is therefore a व्यवसाय. ( See Sanskrit Commentary. )

अथ विरोधनम् Now the author defines विरोधन.

(94) **संरब्धानां विरोधनम् । ( संरम्भोक्तिर्विरोधनम् )**

When, one expresses his power in exciting words, it is called विरोधन.[1]

यथा वेणीसंहारे—"राजा—रे रे मरुत्तनय किमेवं वृद्धस्य राज्ञः पुरतो निन्दितव्यमप्यात्मकर्म श्लाघसे ? अपिच—

१ "विरोधनं तु संरम्भादुत्तरोत्तरभाषणम्" Bha. XXI. 96.
"कार्यात्ययोपगमनं विरोधनमिति स्मृतम्" S. D. VI. 106.

कृष्टा केशेषु भार्या तव तव च पशोस्तस्य राज्ञस्तयोर्वा
प्रत्यक्षं भूपतीनां मम भुवनपतेराज्ञया द्यूतदासी ।
अस्मिन् वैरानुबन्धे तव किमपकृतं तैर्हता ये नरेन्द्रा
बाह्वोर्वीर्यातिसारद्रविणगुरुमदं मामजित्वैव दर्पः ॥

( भीमः क्रोधं नाटयति )

अर्जुनः—आर्य प्रसीद प्रसीद किमत्र क्रोधेन—
अप्रियाणि करोत्येष वाचा शक्तो न कर्मणा ।
हतभ्रातृशतो दुःखी प्रलापैरस्य का व्यथा ॥

भीमः—अरे भरतकुलकलङ्क—
अद्यैव किं न विसृजेयमहं भवन्तं दुःशासनानुगमनाय कटुप्रलापिन् ।
विघ्नं गुरू न कुरुतो यदि मत्कराग्रनिर्भिद्यमानरणितास्थिनि ते शरीरे ॥

अन्यच्च मूढ—शोकं स्त्रीवन्नयनसलिलैर्यत्परित्याजितोऽसि
भ्रातुर्वक्षःस्थलविदलने यच्च साक्षीकृतोऽसि ।
आसीदेतत्तव कुनृपतेः कारणं जीवितस्य
क्रुद्धे युष्मत्कुलकमलिनीकुञ्जरे भीमसेने ॥

राजा—दुरात्मन् भरतकुलापसद पाण्डवपशो, नाहं भवानिव विकत्थनाप्रगल्भः । किन्तु—द्रक्ष्यन्ति न चिरात्सुप्तं बान्धवास्त्वां रणाङ्गणे ।

मद्गदाभिन्नवक्षोस्थिवेणिकाभङ्गभीषणम् ॥" इत्यादिना संरब्धयोर्भीमदुर्योधनयोः स्वशक्त्युक्तिविरोधनमिति । As for example in the Venisamhara—"King ( Duryodhana )—O Bhima, what is the use of your this speech that you boast even of your defamed actions, before the aged King ( my father ). Your ( of all you five brothers ) wife ( Draupadi ), who was my slave—for I won her in gambling,—was dragged by my order for I am the master of the world, while you are but a beast. All that was done in the presence of the other kings. The main quarrel therefore is between you ( the Pandavas ) and myself. The Kings, who are killed by you, did not do you any harm as the enmity is between us only. Your vanity is baseless as long as I, who, am proud of my wealth in the form of the

real strength of my forearms, am not conquered. ( Bhima, hearing this, imitates anger. ) Arjuna—Sir, be calm, your anger is out of season here. He uses offensive words; for his power is now in his tongue only and not in his actions. Now, he is lamenting the death of his hundred brothers and be assured that he can not harm anybody. Bhima ( to Duryodhana )—O, the stainer of the race of Bharata, your speech is abusive. I must have sent you to follow Dusshasana, just now, when your body be torn by my nails and be sounding on account of the breaking of its bones, but my two masters ( Krishna and Yodhisthira ) prevent me from doing all this. Moreover, O fool, do you know, why I did not kill you first of all ? I was like an elephant for the lotus-plants of your family and was very angry with you all. But I did not kill you first. Yoy are made shed tears, like a woman, on account of your sorrows and you are made witness of the tearing of the chest of your younger brother. These are the reasons why I did not kill you and you are still alive. King ( Duryodhana)—Villain, I do not boast of my bravery like you. But see now. Before long, your relatives will see you asleep ( i. e. dead ) and deformed by the braid-like chain of the bones of your chest, which will be broken by my mace, upon the battle-field." In these passages, showing their own superiority, Bhimasena and Duryodhana, who are very angry with each other, speak and therefore it is a विरोधन

अथ प्ररोचना Now the author defines प्ररोचना.

(95) सिद्धामन्त्रणतो भाविदर्शिका स्यात्प्ररोचना ।

When the future success is said beforehand by

any सिद्ध, ( see App. ) it is called प्ररोचना.[1]

यथा वेणीसंहारे—"पाञ्चालकः—अहं च देवेन चक्रपाणिना" इत्युपक्रम्य "कृतं सन्देहेन—

"पूर्यन्तां सलिलेन रत्नकलशा राज्याभिषेकाय ते
कृष्णात्यन्तचिरोज्झिते च कबरीबन्धे करोतु क्षणम्।
रामे शातकुठारभासुरकरे क्षत्रद्रुमोच्छेदिनि
क्रोधान्धे च वृकोदरे परिपतत्याजौ कुतः संशयः॥"

इत्यादिना—"मङ्गलानि कर्त्तुमाज्ञापयति देवो युधिष्ठिरः" इत्यन्तेन द्रौपदीकेशसंयमनयुधिष्ठिरराज्याभिषेकयोर्भाविनोरपि सिद्धत्वेन दर्शिका प्ररोचनेति। As for example in the Venisamhara, from "Panchalaka—I am sent to you by Lord Krishna." to "The doubt is useless. The jewelled jars must be filled with water for your coronation. Draupadi must enjoy the festival of tying her hair which she had to give up for a long time. There is no room for doubt about the victory, when Rama ( Parashurama ), whose hand is shining with eversharp battle-axe, and who is the cutter of the tree of Khatriya race or Bhima, who is wild ( lit. blind ) with anger is gone to the battlefield. And Lord Yudhishthira therefore orders to perform the auspicious rites." By this passage, the tying of Draupadi's hair and the coronation of Yudhisthira are shown as a prophecy of Lord Krishna. It is therefore a प्ररोचना.

अथ विचलनम् Now the author defines विचलन.

(96) **विकत्थना विचलनम्।**

One's boasting is termed as विचलन।[2]

---

१ "प्ररोचना च विज्ञेया सम्भारार्थप्रकाशिनी" Bha. XXI. 98.
( —तु ) S. D. VI. 106.

२ विचलन is not found in the Natyashastra and Sahitya Darpana etc.

यथा वेणीसंहारे—"भीमः—तात, अम्ब—

सकलरिपुजयाशा यत्र बद्धा सुतैस्ते तृणमिव परिभूतो यस्य गर्वेण लोकः। रणशिरसि निहन्ता तस्य राधासुतस्य प्रणमति शिरसा वां मध्यमः पाण्डवोऽयम् ॥ अपि च तात, चूर्णिताशेषकौरव्यः क्षीवो दुःशासनासृजा। भङ्क्ता सुयोधनस्योर्वोर्भीमोऽयं शिरसाऽञ्चति ॥"

इत्यनेन विजयबीजानुगतस्वगुणाविष्करणाद्विचलनम्। As in the Venisamhara,—"Bhima—Uncle, aunt, this mid-Pandava ( i. e. I, Arjuna ) who has killed the son of Radha ( Karna ) in the front of the battle, on whom, your sons had planted the hope of conquering their enemies and by whose vanity the world was despised like a straw, bows before you, with his head. Moreover—, Uncle, this Bhima ( in person ), who has killed all Kauravas, who is intoxicated with the blood of Dusshasana and who will break the thighs of Duryodhana worships you with his head." In this passage, Bhima and Arjuna are shown boasting of their power which is in the favour of their victory. It is therefore a विचलन. [ Either the commen tater Dhanika or the editors of the Dasharupaka forgot that the first verse of this example is spoken by Arjuna and not by Bhimasena as shown above. ]
यथा च रत्नावल्याम्—"यौगन्धरायण :—

"देव्या मद्वचनाद्यथाऽभ्युपगतः पत्युर्वियोगस्तदा
सा देवस्य कलत्रसंघटनया दुःखं मया स्थापिता।
तस्याः प्रीतिमयं करिष्यति जगत्स्वामित्वलाभः प्रभोः
सत्यं दर्शयितुं तथापि वदनं शक्नोमि नो लज्जया ॥"

इत्यनेनान्यपरेणापि यौगन्धरायणेन 'मया जगत्स्वामित्वानुबन्धी कन्यालाभो वत्सराजस्य कृतः' इति स्वगुणानुकीर्त्तनाद्विचलनमिति। As also in the Ratnavali,—"Yougandharayana—( When I handed over Sagarika to her ), the queen got the separation from her husband. I brought

another wife to the king and consequently I let her remain in long unhappiness. It is true that she will be happy on her husband's being king of the whole world, yet, I am so ashamed that I hesitate in showing my face to her." In this passage, Yougandharayana boasts of his wisdom and good qualities and his doings in Vatsaraja's winning Ratnavali, which is the cause of his being the King of the whole world. It is therefore a विचलन.

अथादानम् Now the आदान is defined. ।

(97) आदानं कार्यसङ्ग्रहः ।

The summary of one's actions is called आदान.[1]

यथा वेणीसंहारे—"भीमः—ननु भोः समन्तपञ्चकसञ्चारिणः—

"रक्षो नाहं न भूतो रिपुरुधिरजलाप्लाविताङ्गः प्रकामं
निस्तीर्णोरुप्रतिज्ञाजलनिधिगहनः क्रोधनः क्षत्रियोऽस्मि ।
भो भो राजन्यवीराः समरशिखिशिखादग्धशेषाः कृतं वः
त्रासेनानेन लीनैर्हतकरितुरगान्तर्हितैरास्यते किम् ॥"

इत्यनेन समस्तरिपुवधकार्यस्य सङ्गृहीतत्वादादानम् । As for example in the Ratnavali, "Bhima—Gentlemen, walking about in the Samantapanchaka, ( See App. ) I am neither a demon nor a ghost. My body is bathed with water in the form of the blood of my enemies. I am a formidable Kshatriya, who has crossed the deep ocean of a most difficult vow. O brave Kshatriyas, you have remained ( you only are still safe ) from burning in the flames of fire in the form of this great battle. Enough with fear now. Why have you hidden yourselves behind the dead bodies of the elephants and horses ?" By this, the

१ "बीजकार्योपगमनादादानमिति संज्ञितम्" Bha. XXI. 97.
"कार्यसङ्ग्रह आदानम्" S. D. VI. 107.

whole of the actions of killing the enemies is summarised and it is therefore an आदान.

यथा च रत्नावल्याम्—"सागरिका (दिशोऽवलोक्य)—दिट्ठिआ समन्तादो पज्जलिदो भअवं हुअवहो अज्ज करिस्सदि दुक्खावसाणं (दिष्ट्या समन्तात् प्रज्वलितो भगवान् हुतवहोऽद्य करिष्यति दुःखावसानम्)।" इत्यनेनान्यपरेणापि दुःखावसानकार्यस्य सङ्ग्रहादादानम्। यथा च "जगत्स्वामित्वलाभः प्रभोः" इति दर्शितमेव। As also in the Ratnavali,—"Sagarika (seeing all around her)—Luckily, the god of fire has arisen all around me and it (he) will end all my troubles." In this passage, though the result is otherwise, the end of Sagarika's troubles is summarised (!) and it is an आदान. And also in—"जगत्स्वामित्व—०" (See No. 97) is already shown which is also an आदान.

इत्येतानि त्रयोदशावमर्शाङ्गानि। These are the thirteen auxiliary divisions of the अवमर्श. तत्रैतेषामपवादशक्तिव्यवसायप्ररोचनादानानि प्रधानानि। Of these the अपवाद, शक्ति, व्यवसाय, प्ररोचना and आदान are the most important and chief ones.

अथ निर्वहणसन्धिः। Now the निर्वहणसन्धि is defined.

(98) बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम्॥ ४८॥
एकार्थ्यमुपनीयन्ते यत्र निर्वहणं हि तत्॥[1]

The part of the story in which, the four states of a drama, (viz. मुख, प्रतिमुख, गर्भ and अवमर्श) are unified in one and led to the last result, is called the निर्वहण.

यथा वेणीसंहारे, कञ्चुकी—(उपसृत्य) महाराज, वर्धसे। अयं

१ "समानञ्च समार्थानां मुख्यार्थानां सबीजिनाम्। फलोपसङ्गतानां च ज्ञेयं निर्वहणं तु तत्" Bha. XXI. 43.

The reading of S. D. and this book is one and the same in this place.

खलु कुमारभीमसेनः सुयोधनक्षतजारुणीकृतसकलशरीरो दुर्लक्ष्यव्यक्तिः" । इत्यादिना द्रौपदीकेशसंयमनादिमुखसन्ध्यादिबीजानां निजनिजस्थानोपक्षिप्तानामेकार्थतया योजनम् । As for example in the Venisamhara--"Chamberlain ( approaching )—O King of the kings, I congratulate you. That is prince Bhimsena whose body is reddened with the blood of Suyodhana and who can be recognised with much difficulty." In this passage, the बीज ( i. e. the tying of the hair of Draupadi ) and other मुखसन्धिs that were placed in different places are centralised and unified. ( It is therefore a निर्वहणसन्धि ).

यथा च रत्नावल्यां सागरिकारत्नावलीवसुभूतिबाभ्रव्यादीनामर्थानां मुखसन्ध्यादिषु विप्रकीर्णानां वत्सराजैककार्यार्थत्वम्—"वसुभूतिः ( सागरिकां निर्वर्ण्यापवार्य ) बाभ्रव्य, सुसदृशोयं राजपुत्र्या" इत्यादिना दर्शितमिति निर्वहणसन्धिः । As in the Ratnavali, the business of Sagarika, Ratnavali ( ! ), Vasubhuti Babhravya and others which was scattered in different places and which is centralised and led to one result in the form of the success of Vatsaraja, as Vasubhuti ( seeing Sagarika minutely and aside ) Babhravya, the girl quite resembles our princess." This is shown in the Ratnavali. It is therefore a निर्वहणसन्धि. अथ तदङ्गानि

(99) सन्धिर्[1] विबोधो[2] ग्रथनं[3] निर्णयः[4] परिभाषणम्[5] ॥ ४९ ॥
प्रसाद[6]आनन्द[7]समयाः[8] कृति[9]भाषो[10]पगूहनाः[11] ॥
पूर्वभावो[12]पसंहारौ[13] प्रशस्तिश्च[14] चतुर्दश ॥ ५० ॥

They are fourteen. ( See the text. )

यथोद्देशं लक्षणमाह. Now the author defines them according to their order.

(100) सन्धिर्बीजोपगमनम् ।

To attain the बीज is called सन्धि.[1]

यथा रत्नावल्याम्—"वसुभूतिः—बाभ्रव्य सुसदृशीयं राजपुत्र्या । बाभ्रव्यः—ममाप्येवमेव प्रतिभाति ।" इत्यनेन नायिकाबीजोपगमात्सन्धिः । As for example in the Ratnavali, "Vasubhuti—O Babhravya, this girl quite resembles our princess. Babhravya—I also think the same." In this passage, the बीज in the form of finding the heroine is attained and it is a सन्धि.

यथा च वेणीसंहारे "भीमः—

भवति यज्ञवेदिसम्भवे स्मरति भवती यन्मयोक्तम् ।

चञ्चद्भुजभ्रमितचण्डगदाभिघातसञ्चूर्णितोरुयुगलस्य सुयोधनस्य ।

स्त्यानावनद्धघनशोणितशोणपाणिरुत्तंसयिष्यति कचांस्तव देवि भीमः ॥"

इत्यनेन मुखोपक्षिप्तस्य बीजस्य पुनरुपगमात्सन्धिरिति । As also in the Venisamhara, "Bhima—O Lady, born from the sacrificial altar, do you remember what I told you ( See in No.45 )" By this, the बीज which was suggested ( or expressed ) in the मुख is attained and therefore it is a सन्धि.

अथ विबोधः । Now the विबोध is defined.

(101) विबोधः कार्यमार्गणम् ।

To search after some important thing ( or the result ) is called विबोध.[2]

यथा रत्नावल्याम्—"वसुभूतिः—( निरूप्य ) देव कुत इयं कन्यका । राजा—देवी जानाति । वासवदत्ता—अजउत्त एसा ! सागरादो पाविअत्ति भणिअ अमच्चजोगन्धराअणेण मम हत्थे णिहिदा । अदो ज्जेव साग-

[1] "मुखबीजोपगमनं सन्धिरित्यभिधीयते" Bha. XXI. 99.
"बीजोपगमनं सन्धिः" S. D. VI. 110.

[2] Bharata names it विरोध. "कार्यस्यान्वेषणं युक्त्या विरोध इति कीर्त्तितः" Bha. XXI. 99.
"विबोधः कार्यमार्गणम्" S. D. VI. 110.

रिअत्ति सद्दावीअदि । ( आर्यपुत्र, एषा सागरात्प्राप्तेति भणित्वाऽमात्य-यौगन्धरायणेन मम हस्ते निहिता । अतएव सागरिकेति शब्द्यते ) । राजा—( आत्मगतम् ) यौगन्धरायणेन न्यस्ता । कथमसौ मामनिवेद्य करिष्यति ?" इत्यनेन रत्नावलीलक्षणकार्यान्वेषणाद्विबोधः । As for example, in the Ratnavali,—Vasubhuti—( observing carefully. ) My Lord, where is this girl from ? King—The queen knows. Vasavadatta—My Lord, our minister Yougandharayana told me that this girl was found in the ocean and he handed her over to me. She therefore is designated as Sagarika. King ( to himself )—Oh ! handed over by Yougandhara-yana. What, will he do any thing without informing me." In this passage, searching after a business in the form of Ratnavali is shown and therefore it is a विबोध.

यथा च वेणीसंहारे "भीमः—मुञ्चतु मुञ्चतु मामार्यः क्षणमेकम् । युधिष्ठिरः—किमपरमवशिष्टम् । भीमः—सुमहदवशिष्टम् । संयमामि तावद्-नेन दुःशासन ( ! ) शोणितोक्षितेन पाणिना पाञ्चाल्या दुःशासनावकृष्टं केशहस्तम् । युधिष्ठिरः—गच्छतु भवान् अनुभवतु तपस्विनी वेणीसंहारम् ।" इत्यनेन केशसंयमनकार्यस्यान्वेषणाद्विबोध इति । As also in the Venisamhara—"Bhima—Sir, Leave me, Leave me for one moment. Yudhisthira—What remains undone ? Bhima—A great thing remains undone. Now I should tie the hair of Draupadi, which were pulled by Dusshasana, with these my hands that are still wet with the blood of Dusshasana ( ! ). Yudhisthira—you must go. Let her enjoy the tying of hair." In this, the tying of Draupadi's hair is reminded ( lit. asked ) and therefore it is a विबोध.

अथ ग्रथनम् । Now the author defines ग्रथन.

(102) ग्रथनं तदुपक्षेपः[१] ।

---

१ "उपक्षेपस्तु कार्याणां ग्रथनं परिकीर्त्तितम्" Bha. XXI. 100. "उपन्यासस्तु कार्याणां ग्रथनम्" S. D. VI. 110.

The hinting at or to suggest, some business is called ग्रथन.

यथा रत्नावल्याम्—"यौगन्धरायणः—देव क्षम्यतां यद्देवस्यानिवेद्य मयैतत्कृतम् ।" इत्यनेन वत्सराजस्य रत्नावलीप्रापणकार्योपक्षेपाद् ग्रथनम् । As in the Ratnavali—"Yougandharayana—Your Majesty, I beg your pardon for what I did without giving any information to you." By this, the result of the drama in the form of obtaining Ratnavali, by Vatsaraja, is hinted at and consequently it is a ग्रथन.

यथा च वेणीसंहारे—"भीमः—पाञ्चालि, न खलु मयि जीवति संहर्त्तव्या दुःशासनविलुलिता वेणिरात्मपाणिना । तिष्ठतु तिष्ठतु स्वयमेवाहं संहरामि" इत्यनेन द्रौपदीकेशसंयमनकार्यस्योपक्षेपाद् ग्रथनम् । As also in the Venisamhara—"Bhima—O Panchali (Draupadi), you should not tie your hair, that were once scattered by the hand of Dusshasana, with your own hands while I am alive. Stop ! I will tie them with my own hands." By this, the result of the drama in the form of tying the hair of Draupadi is suggested and therefore it is a ग्रथन.

अथ निर्णयः । Now the author defines the निर्णय.

( 103 ) अनुभूताख्या तु निर्णयः ।[1]

To speak of ones own experience is called निर्णय.

यथा रत्नावल्याम्—"यौगन्धरायणः—( कृताञ्जलिः ) देव, श्रूयताम् । इयं सिंहलेश्वरदुहिता सिद्धादेशेनोपदिष्टा योऽस्याः पाणिं ग्रहीष्यति स सार्वभौमो राजा भविष्यति इति । तत्प्रत्ययादस्माभिः स्वाम्यर्थे बहुशः प्रार्थ्यमानापि सिंहलेश्वरेण देव्या वासवदत्तायाश्चित्तखेदं परिहरता यदा न दत्ता तदा लावणिके देवी दग्धेति प्रसिद्धिमुत्पाद्य तदन्तिकं बाभ्रव्यः प्रहितः ।" इत्यनेन यौगन्धरायणः स्वानुभूतमर्थं ख्यापितवानिति निर्णयः । As in the Ratnavali, "Yougandharayana—

---

१ "अनुभूतस्य कथनं निर्णयः समुदाहृतः" Bha. XXI. 100.
"निर्णयः पुनः ।। अनुभूतार्थकथनम्" S. D. VI. 110-111.

( joining his hands ) My Lord, this lady is the daughter of the king of Ceylon. Some seer prophesised that whoever will take her hand ( in marriage ), will be the emperor of the whole earth. I believed his words and I begged her, of her father, for your Majesty, more than once. When the king of Ceylon, avoiding the (would be ) mental distress of Vasavadatta (on account of the coming of her rival), would not give her ( to your Majesty ), I proclaimed that the queen ( Vasavadatta ) was burnt in the salted fire and sent Babhravya to Ceylon." In this passage, Yougandharayana speaks about his past experiences and therefore it is a निर्णय.

यथा च वेणीसंहारे—"भीमः—देव, अजातशत्रो, काद्यापि दुर्योधनहतकः। मया हि तस्य दुरात्मनः

भूमौ क्षिप्त्वा शरीरं निहितमिदमसृक्चन्दनाभं निजाङ्गे
लक्ष्मीरार्ये निषिक्ता चतुरुदधिपयःसीमया सार्धमुर्व्या।
भृत्या मित्राणि योधाः कुरुकुलमखिलं दग्धमेतद्रणाग्नौ
नामैकं यद् ब्रवीषि क्षितिप तदधुना धार्तराष्ट्रस्य नूनम् ॥"

As also in the Venisamhara—"Bhima—My Lord, you have no enemy now. Do you think that the wretched Duryodhana is still alive ?. What I did for that wicked one is that I threw his body on the ground and anointed myself with his blood like the sandal pigment. The royal power together with the kingdom of the earth, the boundaries of which are the waters of four oceans, is yours now. His servants, his friends, soldiers and the whole race of the Kurus have been burnt in this fire of battle. O King, what remains of Duryodhana is only the name which you are uttering now." In this passage, Bhimasena speaks about his experiences and it is a निर्णय.

अथ परिभाषणम्। Now the परिभाषण is defined.

(104) **परिभाषा मिथो जल्पः ।**

The exchange of speeches is परिभाषण[1]

यथा रत्नावल्याम्—"रत्नावली (आत्मगतम्)—कअपराहा देवीए ण सक्कुणोमि मुहं दंसिदुम् । (कृतापराधा देव्या न शक्नोमि मुखं दर्शयितुम्) । वासवदत्ता—(सास्रं पुनर्बाहू प्रसार्य)—एहि अयि निठ्ठुरे ! इदाणीं पि बन्धुसिणेहं दंसेहि (एहि, अयि निष्ठुरे ? इदानीमपि बन्धुस्नेहं दर्शय) (अपवार्य) अज्जउत्त, लज्जामि क्खु अहं इमिणा णिसंसत्तणेण ता लहुं अवणेहि से बन्धणम् । (आर्यपुत्र, लज्जे खल्वहमनेन नृशंसत्वेन तल्लघ्वपनयास्या बन्धनम्) । राजा—यथाह देवी (बन्धनमपनयति) । वासवदत्ता—(वसुभूतिं निर्दिश्य) अमच्चजोगन्धरायणेण दुज्जणीकदह्मि । जेण जाणन्तेण वि णाचक्खिदं । (अमात्ययौगन्धरायणेन दुर्जनीकृतास्मि । येन जानतापि नाचक्षितम्)" इत्यनेनान्योन्यवचनात्परिभाषणम् । As also in the Ratnavali—"Ratnavali (to herself)—I have offended the queen and I cannot show my face to her. The shame prevents me from doing so. Vasavadatta—(with tears in her eyes and stretching her hands) O cruel one, show your sisterly love, even now. (apart to the king) My Lord, I am much ashamed of my this cruelty. Please undo her bindings just now. King—As the queen says (removes her bindings). Vasavadatta (addressing Vasubhuti) I was made cruel by our minister Yougandharayana who knew and did not say anything about (my) Ratnavali." This is the exchange of speeches and therefore it is परिभाषण.

यथा च वेणीसंहारे—"भीमः—कृष्टा येनासि राज्ञां सदसि नृपशुना तेन दुःशासनेन" इत्यादिना "कासौ भानुमती योपहसति पाण्डवदारान्" इत्यनेन भाषणात्परिभाषणम् ।

As also in the Venisamhara, "Bhima—You were dragged by the beast in the form of Dusshasana, in

१ "परिवादकृतं यत्स्यात्तदाहुः परिभाषणम् ।" Bha. XXI. 101
"वदन्ति परिभाषणम् । परिवादकृतं वाक्यम् ।" S. D. VI. 111.

the assembly of the kings." and "Where is Bhanumati now who laughs at the wife of the Pandavas." There are also speeches in this passage and it is termed as परिभाषण. ( See Sans. Comm. ) 11.

अथ प्रसादः Now the प्रसाद is defined.

( 105 ) प्रसादः पर्युपासनम्[१] ।

To attend upon ( hero, heroine or any chief or any chief person ) respectfully is प्रसाद.

यथा रत्नावल्याम्— "देव क्षम्यताम्" इति दर्शितम् । As it is shown in the Ratnavali "My Lord, your pardon etc.". यथा च वेणीसंहारे—"भीमः—( द्रौपदीमुपसृत्य ) देवि पाञ्चालराजतनये, दिष्ट्या वर्धसे रिपुकुलक्षयेण ।" इत्यनेन द्रौपद्या भीमसेनेनाराधितत्वात्प्रसादः । As also in the Venisamhara, "Bhima—( approaching Draupadi ) Lady, I congratulate you at the destruction of the family of your enemies." By this, Bhima propitiates Draupadi and it is therefore a प्रसाद.

अथानन्दः Now the आनन्द is defined.

(106) आनन्दो वाञ्छितप्राप्तिः ॥

The obtaining of the most desired object is called आनन्द.[२]

यथा रत्नावल्याम्—"राजा—यथाह देवी ( इति रत्नावलीं गृह्णाति ) ।" As in the Ratnavali "King—The queen is obeyed ( takes Ratnavali's hand ). यथा च वेणीसंहारे—"द्रौपदी—णाध, विसुमरिदह्मि एदं वावारं । णाधस्स पसादेण पुणो सिक्खिस्सं ( नाथ विस्मृतास्म्येतं व्यापारं, नाथस्य प्रसादेन पुनः शिक्षिष्यामि । ) ( केशान्बध्नाति )" इत्याभ्यामानन्दो दर्शितः । As

१ "शुश्रूषाद्युपसम्पन्नः प्रसाद इति भण्यते" Bha. XXI. 102.
"शुश्रूषादिः प्रसादः स्यात्" S. D. VI. 112.

२ "समागमस्तु योऽर्थानामानन्दः स तु कीर्त्तितः" Bha. XXI. 102.
"आनन्दो वाञ्छितागमः" S. D. VI. 112.

also in the Venisamhara "Draupadi—My Lord, I have forgotten this practice. Now I will again be accustomed of this through your kindness." In these passages, the obtaining of the desired object is shown and it is an आनन्द.

अथ समयः Now the author defines समय.

(107) समयो दुःखनिर्गमः ॥५२॥

The going away of the troubles is called समय.

यथा रत्नावल्याम्—"वासवदत्ता—( रत्नावलीमालिङ्ग्य ) समस्सस, समस्सस बहिणीए !" इत्यनेन भगिन्योरन्योन्यसमागमेन दुःखनिर्गमात्समयः। As for example in the Ratnavali, "Vasavadatta—( embracing Ratnavali) Take heart, my sister, take heart." In this passage, the two sisters ( are recognised by each other and ) met and their troubles ( in the form of rivalry ) are gone and therefore it is a समय. यथा च वेणीसंहारे "भगवन् कुतस्तस्य विजयादन्यद्यस्य भगवान् पुराणपुरुषः स्वयमेव नारायणो मङ्गलान्याशास्ते।

कृतगुरुमहदादिक्षोभसम्भूतमूर्ति
गुणिनमुदयनाशस्थानहेतुं प्रजानाम्।
अजममरमचिन्त्यं चिन्तयित्वापि न त्वां
भवति जगति दुःखी किं पुनर्देव दृष्ट्वा ।."

इत्यनेन युधिष्ठिरदुःखापगमं दर्शयति। As also in the Venisamhara—"My Lord, you are an incarnation ( lit. in person ) of supreme being. Your material form is only the result of the commotion of the महत् ( See App. ) and other cosmic substances. You are associated with the three qualities ( See App. ) to be the cause of the creation, protection and destruction of the universe. You are free from the old age and death and beyond the reach of meditation. The man who, but calls you to his mind becomes free from all

the troubles ( i. e. attains salvation ). Oh ! how can a man ( like myself ) be in trouble who sees you directly." This shows the end of Yudhisthira's troubles and it is therefore a समय.

अथ कृतिः Now the author defines कृति.

(108 ) कृतिर्लब्धार्थशमनम् ।

When the troubles are stopped on account of the obtainment of desired object, the state of one's mind is called कृति.[1]

यथा रत्नावल्याम्—"राजा—को देव्याः प्रसादं बहु न मन्यते । वासवदत्ता—अज्जउत्त ! दूरे से मादुउलं ता तधा करेसु जधा बन्धुअणं ण सुमरेदि ( आर्यपुत्र दूरेऽस्या मातृकुलम् । तत्तथा कुरुष्व यथा बन्धुजनं न स्मरति )" इत्यन्योन्यवचसा लब्धायां रत्नावल्यां राज्ञः सुश्लिष्टस्य उपशमनात्कृतिरिति । As for example in the Ratnavali, "King—Who will not esteem the kindness of the queen ? Vasavadatta—My Lord, her ( of Ratnavali ) mother's family is too far from this place. I therefore request you to treat her so well that she may not remember her maternal family." In this exchange of words, it is shown that Vatsaraja's troubles are gone, for he obtained Ratnavali and his happiness will not be disturbed. It is therefore a कृति.

यथा च वेणीसंहारे—"कृष्णः—एते खलु भगवन्तो व्यासवाल्मीकिप्रभृतयोऽभिषेकमारब्धवन्तस्तिष्ठन्ति ।" इत्यनेन प्राप्तराज्यस्याभिषेकमङ्गलैः स्थिरीकरणं कृतिः । As also in the Venisamhara, "Krishna—These great sages and blessed ones viz. Vyasa, Valmiki, and others are here and they have commenced the blessing recital for your coronation." In this passage, the coronation of Yudhisthira is affirmed and it is a कृति.

अथ भाषणम् Now the भाषण is defined.

---

१ Bharata terms it as द्युतिः । "लब्धस्यार्थस्य शमनं द्युतिरित्यभिधीयते" XXI. 101. "लब्धार्थशमनं कृतिः" S. D. VI. 111.

(109) मानाद्याप्तिश्च भाषणम् ।

The obtainment of respect or honours is भाषण.[1]

यथा रत्नावल्याम्--"राजा—अतः परमपि प्रियमस्ति ?—
यातो विक्रमबाहुरात्मसमतां प्राप्तेयमुर्वीतले
सारं सागरिका ससागरमहीप्राप्त्येकहेतुः प्रिया ।
देवी प्रीतिमुपागता च भगिनीलाभाज्जिताः कोशलाः
किं नास्ति त्वयि सत्यमात्यवृषभे यस्मै करोमि स्पृहाम् ।"

इत्यनेन कामार्थमानादिलाभाद्भाषणमिति । As for example in the Ratnavali, "King—Is there any desired thing which I have not obtained as yet ? Vikramabahu has become now equal to me ( because of his relation with our family ). This my darling Sagarika who is the quintessence of the world and who is the only cause of my being a king over the earth together with the oceans, is obtained by me. The queen is much pleased because she has found her sister and the Koshalas ( see App. ) also are subjugated. I have got all these things because you, the ablest minister, are my well wisher. I lack nothing then. What should I desire for ?" In this passage, the fulfilment of Vatsaraja's desires and his acquiring of honours etc. is shown and therefore it is a भाषण.

अथ पूर्वभावोपगूहने Now the author defines पूर्वभाव and उपगूहन.

(110) कार्यदृष्ट्यद्भुतप्राप्ती पूर्वभावोपगूहने ।

To know what is to be done is called पूर्वभाव[2] ( Bharata and Vishwanata name it पूर्ववाक्य. )

To obtain any supernatural object is उपगूहन.

---

१ "सामदानादिसंयुक्तं भाषणं तूच्यते बुधैः" Bha. XXI. 104.
"सामदानादिभाषणम्" S. D. VI. 113.

२ "पूर्ववाक्यं तु विज्ञेयं यथोक्तार्थप्रदर्शकम्" Bha. XXI. 104.

कार्यदर्शनं पूर्वभावः । यथा रत्नावल्याम्—"यौगन्धरायणः—एवं विज्ञाय भगिन्याः संप्रति करणीये देवी प्रमाणम् । वासवदत्ता—फुडं ज्जेव किं न भणेसि ? पडिवाएहि से रअणमालं त्ति ( स्फुटमेव किं न भणसि प्रतिपादयास्मै रत्नावलीमिति )" इत्यनेन "रत्नावली वत्सराजाय दीयताम्" इति कार्यस्य यौगन्धरायणाभिप्रायानुप्रविष्टस्य वासवदत्तया दर्शनात् पूर्वभावः ॥ To foresee something is पूर्वभाव. As for example in the Ratnavali—"Yougandharayana—Now, the queen knows everything. It is her business to do what is proper for her sister. Vasavadatta—why do you not say distinctly, to give Ratnavali ( to the King ) ?." Here, Vasavadatta foresaw the intention of Yougandharayana and therefore it is a पूर्वभाव.

अद्भुतप्राप्तिरुपगूहनम् ( See the text ) यथा वेणीसंहारे—"( नेपथ्ये ) महासमरानलदग्धशेषाय स्वस्ति भवते राजन्यलोकाय—

क्रोधान्धैर्यस्य मोक्षात्क्षतनरपतिभिः पाण्डुपुत्रैः कृतानि
प्रत्याशं मुक्तकेशान्यनुदिनमधुना पार्थिवान्तःपुराणि ।
कृष्णायाः केशपाशः कुपितयमसखो धूमकेतुः कुरूणां
दिष्ट्या बद्धः प्रजानां विरमतु निधनं स्वस्ति राजन्यकेभ्यः ॥

युधिष्ठिरः—"देवि, एष ते मूर्धजानां संहारोऽभिनन्दितो नभस्तलचारिणा सिद्धजनेन ।" इत्येतेनाद्भुतार्थप्राप्तिरुपगूहनमिति । As in the Venisamhara "( Behind the scenes ) Happiness to all the kings who remained from burning in the fire of great war. The hair of Draupadi—on account of the loosening of which, Pandavas who were maddened with wrath, made every day and in every direction, the wives of so many kings, loose-haired, which is akin to the angry god of death and which is the portentous comet for the family of the Kauravas,—is luckily tied. Let therefore the death of people ( in the war ) stop and may it fare well with the remaining Kings. Yudhisthira—Lady, The tying of your hair is congratulated by the Siddhas ( See .

App. ) living in sky." In this passage, the supernatural thing, in the form of blessing is obtained. It is therefore an उपगूहन. लब्धार्थशमनात्कृतिरपि । It is a कृति also because it shows the obtainment of the desired object and the end of the troubles of the people.

अथ काव्यसंहारः Now the काव्यसंहार is defined.

(111) वराप्तिः काव्यसंहारः ।

The obtaining of the best thing or a boon or any thing, most desirable, is called काव्यसंहार.[1]

"यथा किं ते भूयः प्रियं करोमि"–इत्यनेन काव्यार्थसंहरणात् काव्यसंहार इति । As ( generally at the end of every drama ) "What more your desire shall I fulfil ?" In this, the conclusion of the काव्य is shown. It is therefore the काव्यसंहार.

अथ प्रशस्तिः Now the author defines प्रशस्ति.

(112) प्रशस्तिः शुभशंसनम्[2] ।

The expressing of the farewell of the public is called प्रशस्ति.

यथा वेणीसंहारे—"प्रीततरश्चेद्भवान्तदिदमेवमस्तु—
अकृपणमतिः कामं जीव्याज्जनः पुरुषायुषं
भवतु भगवद्भक्तिर्द्वैतं विना पुरुषोत्तमे ।
कलितभुवना विद्वद्बन्धुर्गुणेषु विशेषवित्
सततसुकृती भूयाद् भूपः प्रसाधितमण्डलः ॥"

इति शुभशंसनात्प्रशस्तिः । As for example in the Venisamhara,—"If you are more pleased with me, this

१ "वरप्रदानं सम्प्राप्तिः काव्यसंहार इष्यते" Bha. XXI. 105.
"वरप्रदानसम्प्राप्तिः काव्यसंहार इष्यते" S. D. VI. 114.

२ "नृपदेवप्रशान्तिश्च प्रशस्तिरभिधीयते" Bha. XXI. 105.
"नृपदेशादिशान्तिस्तु प्रशस्तिरभिधीयते" S. D. VI. 114.

must be ( to all )—May people live full life ( i. e. one hundred years ), free from ignorance and ungenerousness ! May the nonatheistical devotion towords God Vishnu prevail in the world ! May the King be the patron of learned persons, the connoisseur of merits, doing always righteous deeds and loving his subjects !" This is the expression of benediction to the public and therefore it is a प्रशस्ति.

इत्येतानि चतुर्दश निर्वहणाङ्गानि । These are the fourteen subdivisions of निर्वहण. एवं चतुःषष्ट्यङ्गसमन्विताः पञ्च सन्धयः प्रतिपादिताः । Thus the five सन्धिs with their sixty-four auxiliary divisions are shown ( defined and exemplified ).

(113) **उक्ताङ्गानां चतुःषष्टिः ।** ( Explained ).



## DIAGRAM No. 1.

( The figures indicate the Nos. of text in this book. )




१ भरतविश्वनाथयोर्मते विमर्शः ।

## मुखसन्ध्यङ्गानि द्वादश (38)

| ( दशरूपके ) | ( नाट्यशास्त्रे ) | ( साहित्यदर्पणे ) |
|---|---|---|
| उपक्षेपः 39. | उपक्षेपः | उपक्षेपः |
| परिकरः ( परिक्रिया ) 40. | परिकरः | परिकरः |
| परिन्यासः 41. | परिन्यासः | परिन्यासः |
| विलोभनम् 42. | विलोभनम् | विलोभनम् |
| युक्तिः 43. | युक्तिः | युक्तिः |
| प्राप्तिः 44. | प्राप्तिः | प्राप्तिः |
| समाधानम् 45. | समाधानम् | समाधानम् |
| विधानम् 46. | विधानम् | विधानम् |
| परिभावना (परिभावः) 47. | परिभावना | परिभावना |
| उद्भेदः 48. | उद्भेदः | उद्भेदः |
| करणम् 49. | करणम् | करणम् |
| भेदः 50. | भेदः | भेदः |

| ( दशरूपके ) | ( नाट्यशास्त्रे ) | ( साहित्यदर्पणे ) |
|---|---|---|
| | **प्रतिमुखसन्ध्यङ्गानि त्रयोदश । (52)** | |
| **विलासः** 53. | **विलासः** | **विलासः** |
| **परिसर्पः** 54. | **परिसर्पः ।** | **परिसर्पः** |
| **विधूतम्** 55. | **विधूतम् ( विधुतम् )** | **विधुतम्** |
| **शमः** 56. | **तापनम्** | **तापनम्** |
| **नर्म** 57. | **नर्म** | **नर्म** |
| **नर्मद्युतिः** 58. | **नर्मद्युतिः** | **नर्मद्युतिः** |
| **प्रगमनम् (प्रगयणम्)** 59. | **प्रशमनम् (प्रगणनम्)** | **प्रगमनम्** |
| **निरोधः ( निरोधनम्)** 60. | **निरोधः** | **विरोधः** |
| **पर्युपासनम् (पर्युपास्तिः)**61. | **पर्युपासनम्** | **पर्युपासनम्** |
| **पुष्यम्** 62. | **वज्रम्** | **पुष्पम्** |
| **उपन्यासः** 63. | **पुष्पम्** | **वज्रम्** |
| **वज्रम्** 64. | **उपन्यासः** | **उपन्यासः** |
| **वर्णसंहारः** 65. | **वर्णसंहारः** | **वर्णसंहारः** |

गर्भसन्ध्यङ्गानि द्वादश (67.)[1]

| ( दशरूपके ) | ( नाट्यशास्त्रे ) | ( साहित्यदर्पणे ) |
|---|---|---|
| अभूताहरणम् 68. | अभूताहरणम् | अभूताहरणम् |
| मार्गः 69. | मार्गः | मार्गः |
| रूपम् 70. | रूपम् | रूपम् |
| उदाहरणम् (उदाहृति) 71. | उदाहरणम् | उदाहरणम् |
| क्रमः 72. | क्रमः | क्रमः |
| सङ्ग्रहः 74. | सङ्ग्रहः | सङ्ग्रहः |
| अनुमानम् (अनुमा) 75. | अनुमानम् | अनुमानम् |
| अधिबलम् 76. | प्रार्थना | प्रार्थना |
| तोटकम् 77. | आक्षिप्तम् | क्षिप्तिः |
| उद्वेगः 80. | तोटकम् | तोटकम् ( त्रोटकम् ) |
| संभ्रमः 81. | अधिबलम् | अधिबलम् |
| आक्षेपः 82. | उद्भेदः | उद्वेगः |
| | विद्रवः । | |

१ नाट्यशास्त्रे तु त्रयोदश ।

## अवमर्शसन्ध्यङ्गानि त्रयोदश (84.)[1]

| ( दशरूपके ) | ( नाट्यशास्त्रे ) | ( साहित्यदर्पणे ) |
|---|---|---|
| अपवादः 85. | अपवादः | अपवादः |
| संफेटः 86. | सम्फेटः | संफेटः |
| विद्रवः 87. | विद्रवः | व्यवसायः |
| द्रवः 88. | शक्तिः | द्रवः |
| शक्तिः 89. | व्यवसायः | द्युतिः |
| द्युतिः 90. | प्रसङ्गः | शक्तिः |
| प्रसङ्गः 91. | द्युतिः | प्रसङ्गः |
| छलनम् 92. | खेदः | खेदः |
| व्यवसायः 93. | निषेधनम् | प्रतिषेधः |
| विरोधनम् 94. | विरोधनम् | विरोधनम् |
| प्ररोचना 95. | आदानम् | प्ररोचना |
| विचलनम् 96. | छादनम् | आदानम् |
| आदानम् 97. | प्ररोचना | छादनम् |

१ भरतविश्वनाथयोर्मते विमर्शसन्धिः ।

निर्वहणसन्ध्यङ्गानि चतुर्दश (99).

| ( दशरूपके ) | ( नाट्यशास्त्रे ) | ( साहित्यदर्पणे ) |
|---|---|---|
| सन्धिः 100. | सन्धिः | सन्धिः |
| विबोधः 101. | विरोधः | विरोधः |
| ग्रथनम् 102. | ग्रथनम् | ग्रथनम् |
| निर्णयः 103. | निर्णयः | निर्णयः |
| परिभाषणम् (परिभाषा) 104. | परिभाषणम् | परिभाषणम् |
| प्रसादः 105. | द्युतिः | कृतिः |
| आनन्दः 106. | प्रसादः | प्रसादः |
| समयः 107. | आनन्दः | आनन्दः |
| कृतिः 108. | समयः[१] | समयः |
| भाषणम् 109. | उपगूहनम् | उपगूहनम् |
| पूर्वभावः 110. | भाषणम् | भाषणम् |
| उपगूहनम् 111. | पूर्ववाक्यम् | पूर्ववाक्यम् |
| काव्यसंहारः (उपसंहारः) 112. | कार्यसंहारः | काव्यसंहारः |
| प्रशस्तिः 113. | प्रशस्तिः | प्रशस्तिः |

१ In the definitions of निर्वहणसन्ध्यङ्गs भरतनाट्यशास्त्र mentions शम as an additional member but in the enumeration शम is not mentioned as such.

(114) षोढा चैषां प्रयोजनम् ॥५६॥

The necessity for these ( 64 सन्ध्यङ्गs ) is six-fold. कानि पुनस्तानि प्रयोजनान्याह। How their necessity is six-fold is shown below :—

(115) इष्टस्यार्थस्य रचना गोप्यगुप्तिः प्रकाशनम् ।
रागः प्रयोगस्याश्चर्यं वृत्तान्तस्यानुपक्षयः ॥५५॥

(1) To prepare the plot according to the object meditated, (2) to omit or to change the story, which the author ( of the drama ) thinks not proper to be shown, (3) to show what enriches the plot ( even it is not in the original story. ), (4) to exibit the emotions of acting, (5) to show something extraordinary and (6) to prevent the इतिवृत्त from being abridged, they are necessary.

विवक्षितार्थनिबन्धनं गोप्यार्थगोपनं प्रकाश्यार्थप्रकाशनमभिनेयरागवृद्धिश्चमत्कारित्वं च काव्यस्येतिवृत्तस्य विस्तर इत्यङ्गैः षट्प्रयोजनानि संपाद्यन्त इति । विस्तरः ( expansion )………( explained above. )

पुनर्वस्तुविभागमाह—Now the author shows again the divisions of वस्तु ( See No. 17–18 ).

(116) द्वेधा विभागः कर्तव्यः सर्वस्यापीह वस्तुनः ।
सूच्यमेव भवेत् किंचिद्दृश्यश्रव्यमथापरम् ॥५६॥

All parts of the plot should be divided into two viz. (1) सूच्य i. e. some of the parts that are only to be informed indirectly and (2) दृश्यश्रव्य i. e. the parts that are spoken and shown. ( See the Sanskrit commentary. )

कीदृक्सूच्यं कीदृग्दृश्यश्रव्यमित्याह—Now the author shows these two kinds of the वस्तु according to the necessity.

(117) नीरसोऽनुचितस्तत्र संसूच्यो वस्तुविस्तरः ।
दृश्यस्तु मधुरोदात्तरसभावनिरन्तरः ॥५७॥

The part of the story, which is not agreeable and attractive and is improper must be informed indirectly, and the part of the story which is full of constant and illustrious feelings and sentiment must be shown on the stage.

सूच्यस्य प्रतिपादनप्रकारमाह—Now the author shows how the सूच्य (see above) be expressed.

(118) अर्थोपक्षेपकैः सूच्यं पञ्चभिः प्रतिपादयेत् ।
विष्कम्भचूलिकाङ्कास्याङ्कावतारप्रवेशकैः ॥५८॥

The सूच्य should be informed in any of the five suggestive ( parts of the story ) viz. (1) विष्कम्भ, (2) चूलिका, (3) अङ्कास्य, (4) अङ्कावतार and (5) प्रवेशक.

अथ विष्कम्भः Now the author defines विष्कम्भ.

(119) वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः ।
संक्षेपार्थस्तु विष्कम्भो मध्यपात्रप्रयोजितः ॥५९॥

When the parts of the story ( सूच्यs ), past or future, are shown and mentioned in an abridged form and acted by persons of the intermediate class, it is called विष्कम्भ.

अतीतानां भाविनां च कथावयवानां ज्ञापको मध्यमेन मध्याभ्यां वा पात्राभ्यां प्रयोजितो विष्कम्भक इति । ( Explained )

स द्विविधः—शुद्धः संकीर्णश्चेत्याह—The विष्कम्भ is of two kinds, viz. (1) शुद्ध and (2) सङ्कीर्ण.

(120) एकानेककृतः शुद्धः संकीर्णो नीचमध्यमैः ।

(1) That which is acted by one or more than one मध्यपात्र is शुद्ध and (2) that which is acted by some मध्यपात्र and some नीचपात्र is सङ्कीर्ण.

एकेन द्वाभ्यां वा मध्यमपात्राभ्यां शुद्धो भवति । मध्यमाधमपात्रैर्युगपत्प्रयोजितः संकीर्ण इति । ( Explained )

अथ प्रवेशकः—Now the author defines प्रवेशक.

(121) **तद्वदेवानुदात्तोक्त्या नीचपात्रप्रयोजितः ॥६०**
**प्रवेशोऽङ्कद्वयस्यान्तः शेषार्थस्योपसूचकः ।**

The same ( parts of the story as mentioned in the **विष्कम्भ** ) when they are acted in low language by some **नीचपात्र** and between two acts, to show the remaining ( unshown ) part of the story is called **प्रवेश** or **प्रवेशक**.

तद्वदेवेति भूतभविष्यदर्थज्ञापकत्वमतिदिश्यते । अनुदात्तोक्त्या नीचेन नीचैर्वा पात्रैः प्रयोजित इति विष्कम्भलक्षणापवादः । अङ्कद्वयस्यान्त इति प्रथमाङ्के प्रतिषेध इति ।

( The difference between प्रवेशक and **विष्कम्भक** is that the former is acted by the **नीचपात्र**s only while the latter is acted by **मध्यपात्र** or **मध्य** and **नीचपात्र**s. This **प्रवेशक** should not be acted in the beginning of the first act of a drama for its acting is enjoined between two acts. ।[१] )

अथ चूलिका Now the चूलिका is defined.

(122) **अन्तर्जवनिकासंस्थैश्चूलिकार्थस्य सूचना ॥६१॥**

When the actors indicate something from behind the scene, it is called **चूलिका**.[२]

---

१ "मध्यमपुरुषनियोज्यो नाटकमुखसन्धिवस्तुसञ्चारः । विष्कम्भकस्तु संस्कृतपुरोहितामात्यकञ्चुकिभिः ॥ १०९ ॥ शुद्धः सङ्कीर्णो वा द्विविधो विष्कम्भकस्तु विज्ञेयः । मध्यमपात्रैः शुद्धः सङ्कीर्णो नीचमध्यमैः कृतः ॥ ११० ॥······अङ्कान्तराधिकारीसंक्षेपार्थमधिकृत्य बिन्दूनाम् । प्रकरणनाटकविषये प्रवेशको नाम विज्ञेयः ॥ ११२ ॥ नोत्तममध्यमपुरुषैराचरितो नाप्युदात्तवचनकृतः । प्राकृतभाषाचारः प्रवेशको नाम विज्ञेयः ॥११३॥" Bha. XXI. "प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः । अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा ॥" S. D. VI. 58.

२ "अन्तर्यवनिकासंस्थैरुत्तमाधममध्यमैः । अर्थोपक्षेपणं यत्र क्रियते सा हि चूलिका" Bha. XXI. 111. "अन्तर्जवनिकासंस्थैः सूचनाऽर्थस्य चूलिका" S. D. VI. 58.

नेपथ्यपात्रेणार्थसूचनं चूलिका । यथोत्तरचरिते द्वितीयाङ्कस्यादौ—

'( नेपथ्ये । ) स्वागतं तपोधनायाः ( ततः प्रविशति तपोधना । )' इति नेपथ्यपात्रेण वासन्तिकयाऽऽत्रेयीसूचनाच्चूलिका ।

As for example in the beginning of the second act of Uttaracharita—"(Behind the scene.) Welcome to ascetic Atreyi. (then enters the ascetic Atreyi)" This is spoken ( lit. indicated ) by the actor who played the part of Vasantika, behind the scene and it is therefore a चूलिका.

यथा वा वीरचरिते चतुर्थाङ्कस्यादौ—"( नेपथ्ये । ) भो भो वैमानिकाः, प्रवर्त्यन्तां प्रवर्त्यन्तां मङ्गलानि ।

कृशाश्वान्तेवासी जयति भगवान्कौशिकमुनिः
सहस्रांशोर्वंशे जगति विजयि क्षत्रमधुना ।
विनेता क्षत्रारेर्जगदभयदानव्रतधरः
शरण्यो लोकानां दिनकरकुलेन्दुर्विजयते ॥"

इत्यत्र नेपथ्यपात्रैर्देवै रामेण परशुरामो जित इति सूचनाच्चूलिका ।

अथाङ्कास्यम् Now the author defines अङ्कास्य.

(123) **अङ्कान्तपात्रैरङ्कास्यं छिन्नाङ्कस्यार्थसूचनात् ।**

The part of the story which is acted by the अङ्कान्तपात्रs i. e. the actors who act in the end of an act, which informs the subject of the next act, which is disconnected for sometime, is called अङ्कास्य or अङ्कमुख. ।[१]

अङ्कान्त एव पात्रमङ्कान्तपात्रम् । तेन विश्लिष्टस्योत्तराङ्कमुखस्य सूचनं तद्वशेनोत्तराङ्कावतारोऽङ्कास्यमिति । (Explained).

यथा वीरचरिते द्वितीयाङ्कान्ते—"( प्रविश्य । ) सुमन्त्रः—भगवन्तौ वसिष्ठविश्वामित्रौ भवतः सभार्गवानाह्वयतः । इतरे—क भगवन्तौ ।

---

१ "विश्लिष्टमुखमङ्कस्य स्त्रिया वा पुरुषेण वा । यत्र संक्षिप्यते पूर्वं तदङ्कमुखमिष्यते ।" Bha. XXI. 116.

"यत्रस्यादङ्क एकस्मिन्नङ्कानां सूचना खिला । तदङ्कमुखमित्याहुर्बीजार्थख्यापकं च तत् ॥" S. D. VI. 59-60.

सुमन्त्रः—महाराजदशरथस्यान्तिके । इतरे—तदनुरोधात्तत्रैव गच्छामः ।" इत्यङ्कसमाप्तौ "(ततः प्रविशन्त्युपविष्टा वसिष्ठविश्वामित्रपरशुरामाः । )" इत्यत्र पूर्वाङ्कान्त एव प्रविष्टेन सुमन्त्रपात्रेण शतानन्दजनककथार्थविच्छेद उत्तराङ्कमुखसूचनादङ्कास्यमिति ।

As for example in the end of the second act of the Viracharita, "Sumantra ( entering )—Revered Vashistha and Vishwamitra call you all including Bhargava (Parashurama). Others—Where are Their Reverends ?. Sumantra–With Maharaja Dasharatha. Others–Then let us go there." "( Then enter Vashistha, Vishvamitra and Parashurama sitting. )" In these passages, that are spoken by Sumantra, who entered the scene in the end of the first act at the close of the story of Janaka and Satananda, to indicate the story of the next act, and therefore they are called an अङ्कास्य.

अथाङ्कावतारः Now the author defines अङ्कावतारः.

(124) अङ्कावतारस्त्वङ्कान्ते पातोऽङ्कस्याविभागतः ६२॥

When the story of the previous act is continued to the new act without any change, it is called अङ्कावतार.[1]

यत्र प्रविष्टमात्रेण सूचितमेव पूर्वाङ्काविच्छिन्नार्थतयैवाङ्कान्तरमापतति प्रवेशकविष्कम्भकादिशून्यं सोऽङ्कावतारः ।

When the dramatic persons enter the stage and the acting of the story begins without its previous indication ( i. e. in the previous act ), for the part of the story is indicated by the context, in the end

---

१ "अङ्कान्तरेऽथवाङ्के निपतति यस्मात्प्रयोगमासाद्य । बीजार्थयुक्तियुक्तो विज्ञेयोऽङ्कावतारोऽसौ ॥" Bha. XXI. 115.

"अङ्कान्ते सूचितः पात्रैस्तदङ्कस्याविभागतः । यत्राङ्कोऽवतरत्येषोऽङ्कवतार इति स्मृतः" S. D. VI. 58-59.

of the previous act, and without any **प्रवेशक** ro **विष्कम्भक**, it is called the **अङ्कावतार**.

यथा मालविकाग्निमित्रे प्रथमाङ्कान्ते—

"विदूषकः—तेण हि दुवेवि देवीए पेक्खागेहं गदुअ सङ्गीदोवअरणं करिअ तत्थभवदो दूदं विसज्जेध । अथवा मुदङ्गसद्दो ज्जेव णं उत्थावयिस्सदि ।" (तेन हि द्वावपि देव्याः प्रेक्षागेहं गत्वासंगीतकोपकरणं कृत्वा तत्रभवतो दूतं विसर्जयतम् । अथवा मृदङ्गशब्द एवैनमुत्थापयिष्यति ।)" इत्युपक्रमे मृदङ्गशब्दश्रवणादनन्तरं सर्वाण्येव पात्राणि प्रथमाङ्कप्रक्रान्तपात्रसंक्रान्तिदर्शनं द्वितीयाङ्कादावारभन्त इति प्रथमाङ्कार्थाविच्छेदेनैव द्वितीयाङ्कस्यावतरणादङ्कावतार इति ।

As for example in the end of the first act of the Malavikagnimitra—"Clown—Then both of you go to the show room of her Ladyship and prepare the instruments of music and send the massanger to His Highness. Or the sound of the Mridanga itself will awaken His Highness." Hearing the sound of Mridanga, the actors begin the acting of the next act and the story continues with-out any interval and therefore it is an **अङ्कावतार**.

(125) **एभिः संसूचयेत्सूच्यं दृश्यमङ्कैः प्रदर्शयेत् ।**

The **सूच्य** should be informed ( indicated in these ( i. e. **विष्कम्भ**, **प्रवेश** etc. ) and the **दृश्य** must be shown in the acts.

**पुनस्त्रिधा वस्तुविभागमाह ।** Now the author shows that the plot again is of three kinds.

(126) **नाट्यधर्ममपेक्ष्यैतत्पुनर्वस्तु त्रिधेष्यते ॥६३॥**

And again the **वस्तु** is of three kinds on account of the subject of the drama.

**केन प्रकारेण त्रैधं तदाह ।** Now the author shows how these three kinds are formed.

(127) सर्वेषां नियतस्यैव श्राव्यमश्राव्यमेव वा ।

Some parts of the story, that are formed by the poet, are to be heared by all dramatic persons and others are not so. [ But every part of the story is to be heared by the audience. ] तत्र and then—

(128) सर्वश्राव्यं प्रकाशं स्यादश्राव्यं स्वगतं मतम् ॥६४॥

The things that are to be heared by all are spoken laudly others to be spoken to one-self.

सर्वश्राव्यं यद्वस्तु तत्प्रकाशमित्युच्यते । यत्तु सर्वस्याश्राव्यं तत्स्वगतमिति शब्दाभिधेयम् ।

The first variety follows the word प्रकाशम् (aloud) and the second follows the word स्वगतम् ( aside ). [ When there is no स्वगतम् and जनान्तिकम् etc. in a passage, प्रकाशम् is understood and not mentioned. ]

नियतश्राव्यमाह Now the author shows नियतश्राव्य.

(129) द्विधान्यन्नाट्यधर्माख्यं जनान्तमपवारितम् ।

Again there are two other kinds of the नाट्यधर्म ( that which must be spoken ) viz. (1) जनान्त ( or जनान्तिक ) and (2) अपवारित. [ The first of these is spoken aside to someone and the second is spoken to oneself. ] अन्यत्तु नियतश्राव्यं द्विप्रकारं जनान्तिकापवारितभेदेन । [ Explained. ]

तत्र जनान्तिकमाह Now the author defines जनान्तिक.

(130) त्रिपताकाकरेणान्यानपवार्यान्तरा कथाम् ॥६५॥
अन्योन्यामन्त्रणं यत्स्याज्जनान्ते तज्जनान्तिकम् ।

The thing which is concealed from some persons and spoken apart and between two or more persons then the speaker raises all his fingers but bends his ring-finger ( to show that the subject is private one ) it is called जनान्तिक.

यस्य न श्राव्यं तस्यान्तर ऊर्ध्वसर्वाङ्गुलं वक्रानामिकत्रिपताकालक्षणं करं कृत्वान्येन सह यन्मन्त्र्यते तज्जनान्तिकमिति । ( Explained. )

अथापवारितम् Now the author shows अपवारित.

(131) रहस्यं कथ्यतेऽन्यस्य परावृत्यापवारितम् ॥६७॥

When, turning about, one speaks about others secret, it is called the अपवारित.

परावृत्यान्यस्य रहस्यकथनमपवारितमिति (Explained) । नाट्यधर्मप्रसङ्गादाकाशभाषितमाह । Now the author defines आकाशभाषित which falls in the context of the नाट्यधर्म ( i. e. the rules of the dramas ).

(132) किं ब्रवीष्येवमित्यादि विना पात्रं ब्रवीति यत् ।
श्रुत्वेवानुक्तमप्येकस्तत्स्यादाकाशभाषितम् ॥६७॥

When an actor says "what do you say" without the presence of any other actor and shows as if he hears the answer, it is called the आकाशभाषित.

अन्यान्यपि नाट्यधर्माणि प्रथमकल्पादीनि कैश्चिदुदाहृतानि तेषामभारतीयत्वान्नाममालाप्रसिद्धानां केषांचिद्देशभाषात्मकत्वान्नाट्यधर्मत्वाभावाल्लक्षणं नोक्तमित्युपसंहरति—

Some of the authors of this Shastra mention and define other नाट्यधर्मs also—e. g. प्रथमकल्प, but they are not enumerated by Bharata and some of them are known in the dictionaries only and many of them are in the provincial vernaculars and consequently they are not defined here. Now the author concludes.

(132) इत्याद्यशेषमिह वस्तुविभेदजातं
रामायणादि च विभाव्य बृहत्कथां च ।
आसूत्रयेत्तदनु नेतृरसानुगुण्या-
च्चित्रां कथामुचितचारुवचःप्रपञ्चैः ॥६८॥

इति धनञ्जयकृतदशरूपकस्य प्रथमः प्रकाशः ।

The author of a drama, after consulting and thinking of the Ramayana and Brihatkatha and

other books of the sort, should prepare ( compose ) an interesting plot, which should be named after its hero ( or heroine ) or subject-matter, and which should be enriched with the above defined अङ्गs and which should be congenial ( to the taste ) with the proper qualities of the hero and the contextual sentiments with the manifestation of proper and attractive language.

वस्तुविभेदजातं वस्तु वर्णनीयं तस्य विभेदजातं नामभेदाः । रामायणादि बृहत्कथां च गुणाढ्यनिर्मितां विभाव्य आलोच्य । तदनु एतदुत्तरम् । नेत्रिति नेता वक्ष्यमाणलक्षणः, रसाश्च तेषामानुगुण्याच्चित्रां चित्ररूपां कथामाख्यायिकाम् । चारूणि यानि वचांसि तेषां प्रपञ्चैर्विस्तारैरासूत्रयेदनुग्रथयेत् । ( Explained )

The नेता will be defined in the second प्रकाश. The रसs will be defined in the fourth प्रकाश.

तत्र बृहत्कथामूलं मुद्राराक्षसम्—

"चाणक्यनाम्ना तेनाथ शकटालगृहे रहः ।
कृत्यां विधाय सहसा सपुत्रो निहतो नृपः ॥
योगानन्दयशःशेषे पूर्वनन्दसुतस्ततः ।
चन्द्रगुप्तः कृतो राजा चाणक्येन महौजसा ॥"

इति बृहत्कथायां सूचितं श्रीरामायणोक्तं च रामकथादि ज्ञेयम् ॥

इति श्रीविष्णुसुनोर्धनिकस्य कृतौ दशरूपावलोके प्रथमः प्रकाशः

As for example, thd orignal story of the Mudrarakshasa is seen in the Brihatkatha ( of Gunadhya )— "Chanakya secretly created a कृत्या ( see App. ) in the house of a शकटाल and at once killed the king together with his sons. When the fame only of Yogananda remained ( i. e. he was killed ), influential Chanakya made Chandragupta, the son of the former नन्द, the king." Thus it is shown in the Brihatkatha. Like this, the origin of the story of Rama and others should be seen in the Ramayana etc.

Here ends the first chapter of the Dashrupaka.

—:o:—

॥ श्रीगणेशाय नमः ॥

# अथ सावलोकस्य दशरूपकस्य संस्कृतटीकाप्रारम्भः

इहेति। प्रारब्धस्य ग्रन्थस्यादौ। सतामाचारः सदाचारः शिष्टाचारः। शिष्टा ग्रन्थकर्तारः सर्व एव ग्रन्थादौ मङ्गलमाचरन्ति। मङ्गलाचरणफलं तु ग्रन्थस्य निर्विघ्नपरिसमाप्तिरित्यपि शिष्टानां मतम्। तच्च मङ्गलाचरणमाशीर्वादनमस्कारवस्तुनिर्देशानामन्यतमेन भवति। तत्राशीर्वादरूपं प्रायेण नाटकादिषु दृश्यते। इह तु ग्रन्थस्य कर्त्रा नमस्कारात्मकमकारि। नमस्कारश्च प्रकृताभिमतयोरेवेष्टदेवयोरत्र वर्तते। प्रकृतमत्र नाट्यम्। तस्य नाट्यस्य ताण्डवरूपस्य भगवान् भव एवादौ प्रयोगमकरोदिति प्रसिद्धिः। शिवस्य ताण्डवे मृदङ्गध्वनिसहोदरो भगवतो गणेशस्य कण्ठध्वनिर्नाट्यसतीवोपाकरोदिति ग्रन्थस्य कर्तुरवस्थाकल्पनम्। यो हि देवो भगवतो महेश्वरस्य नाट्यमुपचकार यश्च विघ्ननाशचणः स एवात्र प्रथमं नमस्कृतः। यत्कण्ठः—अत्र कण्ठ इति कण्ठाद्विनिर्गतो ध्वनिरभिप्रेतः। नीलकण्ठस्ताण्डवं करोति। गणेशकण्ठस्तत्ताण्डवमुपकरोति। यद्वा नीलकण्ठो मयूरः। मृदङ्गध्वनिसदृशं गणेशकण्ठध्वनिं श्रुत्वा स्कन्दवाहनमयूरनर्तनमत्र कविराशंसते। एवमत्र नृत्यति मयूरे गणेशकण्ठध्वनिर्मृदङ्गवदाचरति मयूरनृत्यमुपकरोतीति—कार्य—कारणपौर्वापर्यविपर्ययादतिशयोक्त्यलङ्कारभेदः। पुष्करायत इति लुप्तोपमाभेदश्च ॥ दशरूपानुकारेणेति—भाव एषामस्तीति भावका रसिका भक्ताश्च। "अत इनिठनौ" इति—भावशब्दाट्ठन् प्रत्ययः॥ उद्धृत्येति—'यं नाट्यवेदं वेदेभ्यः सारमादाय ब्रह्मा कृतवान्'। यथोक्तं मुनिना भरतेन—

"महेन्द्रप्रमुखैर्देवैरुक्तः किल पितामहः।
क्रीडनीयकमिच्छामो दृश्यं श्रव्यं च यद्भवेत् ॥ ११ ॥
न वेदव्यवहारोऽयं संश्राव्यः शूद्रजातिषु।
तस्मात्सृजापरं वेदं पञ्चमं सार्ववर्णिकम् ॥ १२ ॥
एवमस्त्विति तानुक्त्वा देवराजं विसृज्य च।
सस्मार चतुरो वेदान् योगमास्थाय तत्त्ववित् ॥ १३ ॥
धर्म्यमर्थ्यं यशस्यं च सोपदेशं स सङ्ग्रहम् ॥
भविष्यतश्च लोकस्य सर्वकर्मानुदर्शकम् ॥ १४ ॥

सर्वशास्त्रार्थसम्पन्नं सर्वशिल्पप्रदर्शकम् ।
नाट्यसंज्ञमिमं वेदं सेतिहासं करोम्यहम् ॥ १५ ॥
एवं सङ्कल्प्य भगवान् सर्ववेदाननुस्मरन् ।
नाट्यवेदं ततश्चक्रे चतुर्वेदाङ्गसम्भवम् ॥ १६ ॥
जग्राह पाठ्यमृग्वेदात् सामभ्यो गीतमेव च ।
यजुर्वेदादभिनयान् रसानाथर्वणादपि ॥ १७ ॥
वेदोपवेदैः सम्बद्धो नाट्यवेदो महात्मना ।
एवं भगवता सृष्टो ब्रह्मणा ललितात्मकः ॥ १८ ॥

इति प्रथमाध्याये ।

भरतश्चाभिनयमभिनयनियमोपेतं नाट्यशास्त्रञ्चकारेत्यर्थः । यं नाट्यवेदमनुसृत्य नीलकण्ठः शिवस्ताण्डवं शर्वाणी पार्वती च लास्यञ्चकारेत्यर्थः ॥ व्याकीर्ण—इति ॥ न ममायं ग्रन्थो नूतनान्नियमान्दधाति किन्तु, अत्र सङ्क्षेपेण सारल्येन च भरतादिप्रोक्ता एव नाट्यादिनियमा दर्श्यन्ते ॥ आनन्देति—अत्र केचिदिति भामहोक्तमुद्धरति—"धर्मार्थ–०" इत्यादि । किन्त्वत्र धनिकोक्तं चिन्त्यम् । काव्यादिभ्यः कलाप्रसादीनामनिर्वारितयोत्पत्तेः । यदि धर्मादिप्रीतिश्च काव्यादिभ्यो न स्यात्तर्हि भरताद्युक्तं विरुध्येत ॥ रामाद्यवस्थारोपेणेति—यथा सादृश्यारोपे रूपकाख्योऽलङ्कारो भवति तथैवावस्था ( सादृश्या )–रोपे रूपकमित्युच्यते । इत्यर्थः ॥ दशधैवेति—रसाश्रयमिति रूपकस्य विशेषणम् दशधैवेत्यनेन नास्य शब्दस्य कोऽपि सम्बन्धः । तत्समारोपात् रसाश्रयं रूपकं ( भवति ) तच्च दशधैव । इत्यन्वयः ॥ अन्यद्भावाश्रयं नृत्यमिति—रसानपेता नायकाद्यवस्थानुकृतिर्नाट्यमित्यभिधीयते । नृत्ये च केवलं भावा एव भवन्ति । ततो नाट्यनृत्ययोर्भेदं दर्शयति । नृतेरित्यादि । उदाहरति—यथा चेति ॥ तालश्चञ्चत्पुटादिरिति—यथाह भरतः—( एकत्रिंशेऽध्याये )

"तालो घन इति प्रोक्तः कलापातलयान्वितः ।
कालस्य च प्रमाणं वै विज्ञेयं कालयोत्कृतिभिः ॥१॥
चञ्चत्पुटस्तु विज्ञेयस्तथा चापपुटोऽपि च ॥
चतुष्कलोथ द्विकलस्तालो यस्मात् प्रवर्तते" ॥२॥

इत्यादि–तस्य भेदास्तत्रैव द्रष्टव्याः ।
लयो द्रुतादिः—यथाह स एव—"ततः कलाकालकृतो लय इत्यभिसंज्ञितः ॥
त्रयो लयास्तु विज्ञेया द्रुतमध्यविलम्बिताः ॥४॥
आद्यमिति—आङ्ग्लभाषाटीकया सह सङ्गीतरत्नाकरश्लोका द्रष्टव्याः ॥

नाटकाद्युपकारकमिति—लास्यताण्डवे भावादिद्योतनेन रसोत्तेजकतया नाटकाद्युपकुरुतः ॥ ननु सर्वाण्येव नाटकादीनि रूपकाणि, अनुकारात्मकानि, कानि तर्हि तेषां भेदकानीत्याह—वस्तु नेतेति ॥ तत्रेति—नायकादिचरितमेवाधिकारिकम् । यदानुषङ्गिकम्—नायकचरितोपकारमात्रफलं तत्प्रासङ्गिकमिति । तदेवाह—अधिकारः फलस्वाम्यम्, प्रासङ्गिकमिति च ॥ यातोऽस्मीत्यत्र धनिकमतेऽन्योक्तिरलङ्कारः । मम्मटविश्वनाथादिभिस्त्वेषोऽलङ्कारो मत एव नास्ति । अप्रस्तुतप्रशंसया एव तत्कार्यकारित्वात् । किन्त्वस्मिन्पद्येऽप्रस्तुतप्रशंसालङ्कारोऽपि नास्ति । समासोक्तिरेवात्र वर्तते विशेषणैः कार्येण च सूर्ये नायकत्वस्य सरोरुहिण्यां च नायिकात्वस्यारोपात् । आनन्दनिस्यन्दिषु–०इत्यस्य कार्यं त्रिवर्गः—०इत्यत्र विरोधस्तु दुर्निवार एव । ततश्च भामहोक्तं नोपपत्तिहीनम् । स्वल्पोद्दिष्ट इति—यथा वटादि बीजं लघु भवति किन्तु वृक्षविस्तारस्य महतस्तदेव कारणम् । एवं नाटकबीजं स्वल्पमेव भवेत् किन्तु तस्यैव विस्तरोऽनेकधा स्कन्धशाखापत्रपुष्पादिवत् प्रवृद्धो नाटकतां भजते । अवस्थाः पञ्च कार्यस्येति । आरम्भमारभ्य कार्यस्य क्रमेण पञ्च रूपाणि भवन्ति । तत्र फलप्राप्तिरारम्भः । आरब्धे कार्ये उपस्थिते च प्रत्यूहे उपायान्वेषणं प्रयत्नः । तदा च फलप्राप्तेः सम्भवः । तस्या एव निश्चयः । फलप्राप्तिरवसाने ।—अर्थप्रकृतय इति—यथा मानवादिनि शरीरेऽङ्गानामवयवानां वा सन्धय उपसन्धयश्च भवन्ति तथैव नाटकावयवानां सन्धयस्तेषामङ्गानि च । सिद्धेर्भ्रान्तिर्नास्ति सत्यमित्येतावदेव परिन्यासः । चतुर्थः पादस्तु व्यर्थ उदाहरणे । बीजागमः समाधानमिति—विश्वनाथेन त्वस्योदाहरणे "यत्सत्यव्रतभङ्गभीरुमनसा–०" अयं श्लोक उद्धृतः । अत्र बीजागमस्य सुबोधतरत्वादिदमेव पद्यस्योदाहरणं युक्तम् । धनिकेनोद्धृतयोरुदाहरणयोस्तु बीजागमो न तादृक्सुबोधः । विधानमिति—धनिकप्रदर्शित उदाहरणे सुखदुःखयोरेकस्मिन्काले नास्त्युपस्थितिः । अतस्तत्र न सम्यग्विधानमाभाति । अतो विश्वनाथोद्धृतमुदाहरणं समीचीनतरम् । यथा—

"उत्साहातिशयं वत्स तव बाल्यं च पश्यतः ।
मम हर्षविषादाभ्यामाक्रान्तं युगपन्मनः ॥"

विस्मयरस इति यद्धनिकेनोक्तं तद्विषये ममाङ्ग्लभारतीटीका द्रष्टव्या ॥ उद्भेद इति—धनञ्जयस्योद्भेदलक्षणं न साक्षाद्भरतादिग्रन्थेषूपलभ्यते । तत्र धनिकेन ये उदाहरणे दत्ते तयोस्तु यथाकथमपि प्रतीयते भरतादिलक्षित उद्भेदः ॥ सर्वत्र चेहेति—उभयोरेवोदाहरणयोरित्यर्थः । प्रथम उदाहरणे—"दिट्ठं जं पेक्खिदव्वं" इत्युद्देशः "णमो दे—०"

इति प्रतिनिर्देशः । द्वितीये च "आर्य गच्छाम इदानीं" इति—उद्देशः । "तत्पाञ्चालि—०" इति प्रतिनिर्देशः ॥ उभयत्र प्रतिनिर्देशः पूर्वमुक्तस्त-च्चानुचितमिति समादधाति—क्रियाक्रमस्याविवक्षितत्वादिति ॥ अत्र सवत्रेत्या-दि चिन्त्यम् ॥ आङ्ग्लभाषाटीका द्रष्टव्या । भेद इति अत्रापि भरता-दिभ्यो भिद्यते धनञ्जयस्य भेदः । "तस्यार्थस्तत्पदैरेव" इति यत्प्रतिज्ञातं धनञ्जयेन तदपि—अत्र नान्वसारि । मुखसन्धिभेदगणनायाम् "अन्व-र्थानि" इति यदुक्तं तदप्युपेक्षितमत्र । यतो नात्र भेदोऽन्वर्थः । विश्व-नाथेन तु भरतानुसारमेव लक्षणं कृत्वा उदाहृतम्—"अत एवाद्य प्रभृति भिन्नोऽहं भवद्भ्यः" इति । इदं वाक्यं वेणीसंहारे युधिष्ठिरं धार्त्तराष्ट्रैः सन्धित्सुं मत्वा भीमसेनस्य योद्धुकामस्य ॥ लक्ष्यालक्ष्यतयेति—वेणीसंहा-रस्थौ यौ श्लोकावुदाहृतौ तौ न प्रतिमुखसन्धिलक्षणं धनञ्जयकृतमपि समन्वितः ॥ रत्यर्थेहाविलास इति—एतज्ज्ञापयति यद्विलासः शृङ्गाररस-समन्वित एव नाटकादौ भवेदिति । एवं सर्वत्रैव प्रकृतोपयोगीन्येव नाट्याङ्गानि भवन्ति नान्यानीति बोद्धव्यम् ॥ विधूतमिति—आङ्ग्लभाषा-टीका द्रष्टव्या ॥ तच्छम इति—यदि अरतेः शमः शम इति तल्लक्षणं तर्हि रत्नावल्या उद्धृतेऽत्रोदाहरणे प्रकरणविरोधः । यतो न ततः पूर्वमासीद्राज्ञ उदयनस्यारतिः । न च पूर्णतया तत्र सागरिकाया अरतिशमः ॥ भरतेन तु प्रतिमुखसन्ध्यङ्गेषु तापनमित्यप्युक्तम् । विश्वनाथेनापि तदुद्दिष्टं लक्षितं च । तस्योपस्थितिः प्रतिमुखाङ्गेष्ववश्यं भाव्या । तत्र भरतः—"अपाय-दर्शनं यत्तु तापनं नाम तद्भवेत्" तथा च विश्वनाथः—"उपायादर्शनं यत्तु तापनं नाम तद्भवेत्" अस्योदाहरणं तेनैव साहित्यदर्पणे उक्तम् । यथा—"दुल्लहजणाणुराओ—०" ( दशरूपकस्यारत्युदाहरणे द्रष्टव्यम् । ) महामहोपाध्यायाः श्रीदुर्गाप्रसादद्विवेदाः स्वसंस्कृतसाहित्यदर्पणटिप्पण्यां तापनलक्षणे वदन्ति—"दशरूपके तु तापनस्थले शमो निर्दिष्टः" इति—यदि—'अस्मिन् क्रमे यत्र साहित्यदर्पणे तापनं निर्दिष्टं तत्र दशरूपके शमः" इत्यभिप्रेतं द्विवेदमहाभागानां तर्हि नास्ति कापि विप्रतिपत्तिः किन्त्वेषा टिप्पणी "विलासः परिसर्पश्च—०" इत्यादिना यत्र प्रतिमुखा-ङ्गानि परिगणितानि तत्र युज्यते नात्र । अथ यज्ज्ञापयितुं साहित्यदर्पणे तापनमुक्तं तदेव ज्ञापयितुं दशरूपके शम इति चेदभिप्रेतं तेषां विदुषां तर्हि तेषामयं महान् भ्रमः ॥ हितरोध इति—दशरूपके यन्निरोधनं तदेव नाट्यशास्त्रे निरोधसंज्ञां साहित्यदर्पणे च विरोधसंज्ञां भजते । तथा च नाट्यशास्त्रम् "या तु व्यसनसम्प्राप्तिर्निरोधः स प्रकीर्त्तितः" तथा च विश्वनाथः—"विरोधो व्यसनप्राप्तिः" । किन्तु "व्यसन ( सं ) प्राप्तिः"

"हितरोधः" इत्येतयोर्न पूर्णतयाऽर्थैक्यम्—॥ उपन्यास इति—"उपपत्तिकृतो योऽर्थ उपन्यासस्तु स स्मृतः" इति भरतः। "उपन्यासः प्रसादनम्" इति विश्वनाथः॥ चातुर्वर्ण्योपगमनमिति—अत्र वर्णानां पात्राणां संहारो मेलनमित्यभिनवगुप्तमतं विश्वनाथेन दर्शितम्। तच्च नाट्यशास्त्रेऽदृष्टत्वान्नाट्यशास्त्रस्यैव चात्र प्रामाण्यात् न ग्राह्यतां भजति॥ भावज्ञानमिति—इदमेव क्रमलक्षणं नाट्यशास्त्राविरोधि। संरब्धमिति—अत्राङ्ग्लभाषाटीकावलोक्या। विद्रवो वधबन्धादिरिति अत्र आदि-शब्दात्-अग्न्याद्युपप्लवः। ततएव "हर्म्याणां हेमशृंग-०" इत्याद्युदाहरणानि संगच्छन्ते॥ द्रवो गुरुतिरस्कृतिरिति—अत्र तिरस्कृतिः साक्षादथवा व्यञ्जनया च। परोक्षे वा। "वृद्धास्ते-०" इत्यादि वक्रोक्त्या। ज्ञातिप्रीतिरिति" परोक्षे। साक्षात्तु यथा वेणीसंहारे—"कृष्टा केशेषु कृष्णा तव सदसि पुरः पाण्डवानां नृपैर्यैः सर्वे ते क्रोधवह्नौ कृशशलभकुलावज्ञया येन दग्धाः। एतस्माच्छ्रावयेऽहं न खलु भुजबलश्लाघया नापि दर्पात् पुत्रैः पौत्रैश्च कर्मण्यतिगुरुणि कृते तात साक्षी त्वमेव"॥ छलनमिति—नाट्यशास्त्रे छलनं न दृश्यते-किन्तु छादनं तत्र वर्त्तते। एतयोर्लक्षणे समानदेश्ये एव यथा-"अवमानात्कृतं वाक्यं कार्यार्थं छादनं भवेत्।" इति भरतः। "तदाहुश्छादनं पुनः। कार्यार्थमपमानादेः सहनं खलु यद्भवेत्।" इति साहित्यदर्पणे तत्रैव चास्योदाहरणम्-"अप्रियाणि करोत्येष वाचा शक्तो न कर्मणा। हतभ्रातृशतो दुःखी प्रलापैरस्य किं भवेत्" इति। मानद्युतिश्चेति। अत्र भरतधनञ्जययोर्भाषणलक्षणे बहु भिन्ने। षोढा चैषां प्रयोजनमिति—। तथा चोक्तं नाट्यशास्त्रे-"इष्टस्यार्थस्य रचना वृत्तान्तस्यानुपक्षयः। रागप्राप्तिः प्रयोगस्य गुह्यानां चैव गूहनम्॥ आश्चर्यवदभिख्यातं प्रकाश्यानां प्रकाशनम्। अङ्गानां षड्विधं ह्येतदुक्तं शास्त्रे प्रयोजनम्।" तथा च साहित्यदर्पणे—

"इष्टार्थरचनाश्चर्यलाभो वृत्तान्तविस्तरः।
रागप्राप्तिः प्रयोगस्य गोप्यानां गोपनं तथा॥
प्रकाशनं प्रकाश्यानामङ्गानां षड्विधं फलम्।
अङ्गहीनो नरो यद्वन्नैवारम्भक्षमो भवेत्॥
अङ्गहीनं तथा काव्यं न प्रयोगाय युज्यते।
सम्पादयेतां सन्ध्यङ्गं नायकप्रतिनायकौ॥
तदभावे पताकाद्यास्तदभावे तथेतरत्।"

प्रायेण प्रधानपुरुषप्रयोज्यानि सन्ध्यङ्गानि भवन्ति किन्तूपक्षेपादित्रयं बीजस्याल्पमात्रसमुद्दिष्टत्वादप्रधानपुरुषप्रयोजितमेव साधु।

रसव्यक्तिमपेक्ष्यैषामङ्गानां सन्निवेशनम् ।
नतु केवलया शास्त्रस्थितिसम्पादनेच्छया ॥

तथा च यद्वेण्यां दुर्योधनस्य भानुमत्यासह विप्रलम्भो दर्शितः, तत्तादृशेऽवसरेऽत्यन्तमनुचितम् ।"—तथा चोक्तम् ध्वनिकृता—"सन्धिसन्ध्यङ्गघटनं रसादिव्यक्त्यपेक्षया । न तु केवलया शास्त्रस्थितिसम्पादनेच्छया"। किन्तु विश्वनाथेन "वेण्यां दुर्योधनस्य भानुमत्या सह विप्रलम्भः" इति यदुक्तं तत्तल्लक्षणानुसारमपि वेण्यां नास्त्येव । नीरस इति—तत्र नीरसो यथा वेणीसंहारे तृतीयाङ्कादौ द्रोणादीनां बहूनां मान्यानां वीराणां वधः प्रवेशकेनैव सूचितः । अत्रैवानुचितत्वमपि द्रष्टव्यम् । यत्तु कविकुलशिरोमणिना कालिदासेन पञ्चमषष्ठाङ्कमध्ये प्रवेशकेन राज्ञः अङ्गुलीयदर्शनजनितं शकुन्तलास्मरणं सूचितं तत्र न नीरसत्वं न चानौचित्यम् । तथापि नाङ्केन तद्दर्शितमिति कवयो निरङ्कुशा एव । अङ्केष्वपि यत्रानौचित्यं प्रकृत आपतति तदभिनयेनैव सूच्यम् । यथोत्तररामचरिते—"दुर्मुखः—( सास्रम् ) सुणादु महाराओ ( शृणोतु महाराजः ) ( कर्णे ) एवं विअ ( एवमिव ) इति । रामः—अहह अतितीव्रोऽयं वाग्वज्रः । ( इति मूर्च्छति ) ।" ॥ अर्थोपक्षेपकैरित्यादि—यथा नाट्यशास्त्रे एकविंशेऽध्याये—

"विष्कम्भश्चूलिका चैव तथा चैव प्रवेशकः ।
अङ्कावतारोऽङ्कमुखमर्थोपक्षेपपञ्चकम् ॥ १०८ ॥

मध्यमपुरुषनियोज्यो नाटकमुखसन्धिवस्तुसञ्चारः ।
विष्कम्भकस्तु संस्कृतपुरोहितामात्यकञ्चुकिभिः ॥ १०९ ॥"

इत्यादि । तथा च साहित्यदर्पणे षष्ठे परिच्छेदे—

अर्थोपक्षेपकाः पञ्च विष्कम्भकप्रवेशकौ ॥
चूलिकाङ्कावतारोऽथ स्यादङ्कमुखमित्यपि"

साहित्यदर्पणे त्वयं विशेषः—

"यत्स्यादनुचितं वस्तु नायकस्य रसस्य वा ।
विरुद्धं तत्परित्याज्यमन्यथा वा प्रकल्पयेत् ॥

अनुचितमितिवृत्तं यथा रामस्यच्छद्मना वालिवधः । तच्चोदात्तराघवे नोक्तमेव । वीरचरिते तु वाली रामवधार्थमागतो रामेण हत इत्यन्यथा कृतः

अङ्केष्वदर्शनीया या वक्तव्यैव च सम्मता ।
या च स्याद्वर्षपर्यन्तं कथा दिनद्वयादिजा ॥

अन्या सविस्तरा सूच्या सार्थोपक्षेपकैर्बुधैः ॥ अङ्केष्वदर्शनीया कथा युद्धादिकथा ।" इति ॥ अश्राव्यं स्वगतं मतमिति—तथा च विश्वनाथः—

"अश्राव्यं खलु यद्वस्तु तदिह स्वगतं मतम् ॥
सर्वश्राव्यं प्रकाशं स्यात्तद्भवेदपरिवारितम् ।
रहस्यं तु यदन्यस्य परावृत्य प्रकाश्यते ।
त्रिपताककरेणान्यानपवार्यान्तरा कथाम् ।
अन्योन्यामन्त्रणं यत्स्याज्जनान्ते तज्जनान्तिकम् ॥
किं ब्रवीषीति यद्वाक्यं विना पात्रं प्रयुज्यते ।
श्रुत्वेवानुक्तमप्यर्थं तत्स्यादाकाशभाषितम् ॥"

त्रिपताकालक्षणं यथा नाट्यशास्त्रे—

"अतः परं प्रवक्ष्यामि त्रिपताकस्य लक्षणम् ॥
पताके तु यदा वक्रानामिका त्वङ्गुलिर्भवेत् ।
त्रिपताकः स विज्ञेयः कर्म चास्य निबोधत ॥
आवाहनमवतरणं विसर्जनं वारणं प्रवेशश्च ।
उन्नामनं प्रणामो निदर्शनं विविधवचनं च ॥"

इति ॥ पताकाकरलक्षणं तत्रैव यथा—

"प्रसारिताग्राः सहिता यस्याङ्गुल्यो भवन्ति हि ।
कुञ्चितश्च तथाङ्गुष्ठः स पताक इति स्मृतः ॥

इति । इत्यादीति—नेतृरसादीनां लक्षणान्यग्रे वक्ष्यन्ते इति ।

॥ शिवं स्यात्पाठकानाम् ॥

